परस्तपरः । ऋदोरबितीहैव स्यात् । यवः स्तवः, लवः पव इत्यत्र न स्यात् । नैष तकारः । कस्तर्हि दकारः । किं दकारे प्रयोजनम् । अथ किं तकारे । यद्यसन्देहार्थस्तकारः दकारोपि । अथ मुखसुखार्थस्तकारः दकारोपीति । इदं विचार्यते । य एतेषु वर्णेषु वर्णैकदेशा वर्णान्तरसमानाकृतय एतेषामवयवग्रहणेन ग्रहणं स्याद्वा न वेति । कुतः पुनरियं विचारणा । इह हि

---

तन्त्रन्यायाश्रयणादेकस्यैव द्विशक्तित्वादेकशेषाश्रयणाद्वाऽनेकार्थाभिधानमिति भाव बहुव्रीहिवादी चोदयति । किं दकारइति । समासद्वयवादी तं प्रत्याह । अथ कि तकारे इति । तव केवलबहुव्रीहिवादिनो निष्प्रयोजनं तपरत्वम् । ऋकारस्यानण् त्वाद्भिन्नकालानां ग्रहणाप्रसङ्गाद् गुणानां चाभेदकत्वात्तत्पर्यासिचर्थत्वाभावात् । अ तवाऽसन्देहार्थो मुखसुखार्थो वा तकार एवं मम दकार इत्यर्थः । तित्स्वरितमित्य त्रत्यभाष्येणास्य विरोधः । तत्र हि तिति प्रत्ययग्रहणं चोदितम् । इह मा भूत् दिव उ द्युभ्यामिति । ततो दित्वाश्रयणेन प्रत्याख्यातम् । तपरसूत्रे दकारश्चर्त्वभूतो नि र्दिश्यते तेन तत्कालस्य ग्राहको दकार इत्युक्तम् । इह च दकाराभ्युपगमेन ह वादिषु दोषः परिहृतः । अत्राहुः । थकारस्थानिको धकारस्थानिको वा दकारो विवक्षितः । कस्तर्हि दकार इति । वर्णान्तरसमानाकृतय इति । आकारादिष्वका रादिसदृशावयवा ऋकारलृकारयो रेफलकारसदृशावयवौ । संध्यक्षरेष्वकारेकारो कारसदृशाः । तत्र केवलवर्णकार्यमवयवेषु भवति नवेति विचारः । इह हि समुदा

---

भावात्पूर्वोक्तदोषापरिहृतेश्च भाष्यमयुक्तमित्याशङ्क्याह । तपरसञ्ज्ञोति । तपर शब्दनिर्दिष्टसञ्ज्ञिनि गुणवृद्धिसञ्ज्ञे प्रवर्त्तेत इत्यर्थः । एवञ्च त्रिमात्रादीनां ना सञ्ज्ञितया ऽनिर्देशान्नोक्तदोष इति भावः । भाष्ये (ननु चेति ।) एवञ्चैचौ न त पराविति भावः । नेत्याहेति । स एव तपर इति नेत्याहेत्यर्थः । अर्थभेदेन शब्द भेदे तन्त्रन्यायेति । तद्भेदेपि शब्दैक्यपक्षे आह ... एकस्यैव द्विशक्तित्वादिति एकशेषेति । समाहारद्वन्द्वविषये एकशेषाभावेनैकवचनानुपपत्त्येदं चिन्त्यम् । मु खसुखार्थं इति पाठे मयूरव्यंसकादित्वात्समासः । ननु एचोर्ज... [illegible] त्परत्वेपि सञ्ज्ञिनामिकारादीनां क्रिमात्रतास्मिति चेन्न । तपरशब्दबोध्योपि वर्ण स्तत्कालस्यैव सञ्ज्ञेत्यर्थान्न दोषः । गुणानाञ्चेति । अण्सु गुणानात्त्वाभावे अनण्त्वादेव दीर्घादिविषये तत्त्वमिति भावः । ननु दित्त्वे दिव उदित्यत्र तत्का लग्रहणं न स्यादत आह । तपरसूत्रे चेति । इहेति । तपरसूत्रे दकारानाश्रयणे चेत्यपि बोध्यम् । थकारस्थानिक इति । तस्य चेतद्दृष्ट्या ऽसिद्धत्वान्न तत्र तपर सूत्रप्रवृत्तिरिति भावः । अवयवग्रहणेनावयवसदृशवर्णग्रहणेन ग्रहणं स्यान्नवेति भा ष्यार्थः । तत्फलितमाह । तत्र केवलेति । नन्वकारेण एङवयवग्रहणसन्देहश्च

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

समुदाया अप्युपदिश्यन्ते अवयवा अपि । अभ्यन्तरश्च समुदाये ऽवयवः ।

---

था अपीति । ऋलृएओऐऔ इति । अवयवा अपीति । अइउण्ऋऌणिति । तत्र समुदायपरे निर्देशे सन्निहिता अप्यवयवा नान्तरीयकत्वादेजादिसंज्ञा न लभन्ते । अवयवपरे च निर्देशे समुदायो न संज्ञाभाक् । यथा हयवेत्यादावनच्कस्य हलो दुःखेनोच्चार्यत्वान्निर्दिष्टोप्यकारोन्यत्र प्राधान्येन निर्देशाद्धलादिसंज्ञा न प्रतिपद्यते इति दध्यत्रेत्यादावनच्क एव यणादेशः प्रवर्तते । तत्रासत्यामप्येजादिसंज्ञायामयादयः समुदायादेशा अपि नान्तरीयकत्वादवयवान्निवर्तयन्ति । एवं स्थिते अग्न-इन्द्र इत्यादौ यत्रावयवकार्यं प्राप्नोति समुदायकार्यं च तत्रान्तरङ्गत्वात्तत्र च साक्षाच्चोदितत्वात्प्रत्यक्षत्वात्परत्वाच्चावयवकार्यप्रसङ्गः । अवयवावगतिपूर्वकत्वाद्धि समुदायावगमस्य समुदायकार्यं बहिरङ्गम् । अयादीनां चावकाशः । अग्न आयाहीति । नन्वत्र यणादेशो ऽवयवस्य प्राप्नोति । येन नाप्राप्ते इति वा मध्येपवादा इति वा यण एवायादयो बाधकाः स्युः । तत्र यथा दधीन्द्र इत्यत्र दधिशब्दस्य इकारः सवर्णदीर्घत्वं प्रतिपद्यते एवमेकारस्थोपि प्रतिपद्येत । प्रत्याहारे एओङ् ऐऔजित्यत्रावयवानां प्राधान्येनानिर्देशादित्येवं ग्रहणपक्षाशङ्काबीजमुपन्यस्तम् । इदानीमग्रहणपक्षाशङ्काबीजमुपन्यस्यते । अभ्यन्तरश्चेति । तिरोहितत्वादवयवानां समुदायकार्ये

---

अकारादीनामिजादिसञ्ज्ञा प्राप्नोतीति विचारोऽपि कुतो नेत्यत आह । तत्र समुदायेति । अत एव प्राटतीत्यादौ न पररूपम् । तत्र दृष्टान्तमाह । अवयवपरे चेति । यथावयवपरे निर्देशे समुदायो न सञ्ज्ञाभाग् एवं समुदायपरे निर्देशे ऽवयवा न तद्भाज इत्यर्थः । तदुपपादयति । यथेति । अन्यत्रेति । सर्वस्यावयवस्यान्यत्र पृथङ्निर्देशे समुदायनिर्देशः स्वपर एव सर्वस्यावयवस्यान्यत्रानिर्देशे तु समुदायनिर्देशो निर्दिष्टावयवपर इति विवेकः । नन्वेजादिसञ्ज्ञानामवयवावृत्तित्वे कथमेचो निवर्त्तकेनायादिना तदवयवस्य निवृत्तिरत आह । तत्रासत्यामपीति । तन्निवृत्तिं विना समुदायनिवृत्तेः कर्त्तुमशक्यत्वादिति भावः । अवयवकार्यं दीर्घः समुदायकार्यम् तत्र च साक्षादिति । दीर्घे आयादिकार्ये हि समुदायव्यवधानेनावयवो नोदितो न साक्षादिति भावः । साक्षाच्चोदितत्वं प्रत्यक्षत्वं हेतुः । नन्वयादिरनवकाशो ऽत आह । अयादीनामिति । नन्विति । ततश्च विध्यन्तरपूर्वको ऽयादिः सर्वस्य बाधकः स्यादिति भावः । परिहरति । येनेति । प्राधान्येनानिर्देशादिति । अस्यैजादिसञ्ज्ञकत्वेऽपि स्वतन्त्राकारेण ग्रहणं स्यादिति शेषः । भाष्ये ( अभ्यन्तरश्चेति ) । तदुच्चारणं विना समुदायोच्चारणस्याशक्यत्वादित्यर्थः । तदाह । तद्यथा वृक्ष इति । तदुपपादयति । तिरोहितत्वादित्यादिना । समुदायकार्ये पारतन्त्र्यादिति । समुदायसंपादनरूपे कार्ये पारतन्त्र्यादि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तद्यथा । वृक्षः प्रचलन् सहावयवैः प्रचलति । तत्र समुदायस्थस्यावयवस्या-वयवग्रहणेन ग्रहणं स्याद्वा न वेति जायते विचारणा । कश्चात्र विशेषः वर्णैकदेशा वर्णग्रहणेन चेत्सन्ध्यक्षरे समानाक्षरविधिप्रतिषेधः* । वर्णैकदेशा वर्णग्रहणेन चेत्सन्ध्यक्षरे समानाक्षराश्रयो विधिः प्राप्नोति स प्रतिषेध्यः अग्ने इन्द्र । वायो उदकम् । "अकः सवर्णे दीर्घः" इति दीर्घत्वं प्राप्नोति दीर्घे ह्रस्वविधिप्रतिषेधः * । दीर्घे ह्रस्वाश्रयो विधिः प्राप्नोति स प्रतिषेध्यः आलूय । प्रलूय । ह्रस्वस्य पिति कृति तुग्भवतीति तुक् प्राप्नोति । नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति न दीर्घे ह्रस्वाश्रयो विधिर्भवतीति । यदयं दीर्घाच्छे तुकं शास्ति । नैतदस्ति ज्ञापकम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् । किम् । पदान्ताद्वेति विभाषां वक्ष्यामीति । यत्तर्हि योगविभागं करोति इतरथा हि दीर्घात्पदान्ताद्वेत्येव ब्रूयात् । इह तर्हि खट्वाभिः मालाभिः । अतो भिस ऐसित्यैस्भावः प्राप्नोति । तपरकरणसामर्थ्यान्न भविष्यति । इह तर्हि याता वाता अतो लोप आर्द्धधातुके इत्यकारलोपः प्राप्नोति । ननु चात्रापि तपरकरणसामर्थ्यादेव न भविष्यति । अस्ति ह्यन्यत्तपरकरणे प्रयोजनम् । किम् । सर्वस्य लोपो मा भूदिति । अथ क्रियमाणेऽपि तपरे परस्य लोपे कृते पूर्वस्य कस्मान्न भवति । परलोपस्य स्थानिवद्भावादसिद्धत्वाच्च । एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति न आकारस्थस्याकारस्य लोपो भवतीति । यदयमातोनुपसर्गेक इति ककारमनुबन्धं करोति कथं कृत्वा ज्ञापकम् । कित्करणे एतत्प्रयोजनं कितीत्याकारलोपो यथा

---

पारतन्त्र्यात् स्वकार्यस्याप्रयोजकत्वान्नरसिंहवज्जात्यन्तरयोगाद्वर्णान्तरसारूप्यमात्रे तत्कार्याप्रवर्त्तनादित्यर्थः । समानाक्षरेति । समानशब्देन पूर्वाचार्यनिर्देशादकोभिधीयन्ते । दश समाना इति वचनात् । तेन सवर्णकार्यं प्राप्नोतीत्यर्थः । असिद्धत्वाच्चेति । असिद्धवदत्राभादित्यनेन । एतत्प्रयोजनं कितीत्याकारलोपो यथा स्या

---

त्यर्थः । स्वकार्यस्याप्रयोजकत्वादिति । स्वकार्यनिरूपितप्रयोजकत्वाभावादित्यर्थः । तदप्रयोजकत्वाभावे हेतुः । नरसिंहवदिति । तदवयवे नरत्वाद्यभाववदेतदवयवेप्यत्वाद्यभाव इति भावः । वचनादिति । अ आ इ ई उ ऊ ऋ ॠ ऌ दश समाना इति पूर्वव्याकरणवचनादित्यर्थः । समानकार्यम् । अग्रूपसमानाक्षरकार्यमित्यर्थः । सवर्णकार्यमिति पाठे सवर्णदीर्घरूपकार्यमित्यर्थः । भाष्ये ( दीर्घाच्छे इति ) । दीर्घस्य च्छे तुगिति हि तदर्थः । ननु ह्रस्वस्येत्यनाच ह्रस्वेत्यिकि ह्रस्वग्रहणसामर्थ्यादेव तुग्नेति चेन्न । पदलाघवाभावादित्याशयात् । अस्ति हीति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्यादिति । यद्याकारस्थस्याकारस्य लोपः स्यात् कित्करणमनर्थकं स्यात् । परस्य अकारस्य लोपे कृते द्वयोरकारयोः पररूपे हि सिद्धं रूपं स्याद् गोदः कम्बलद इति । पश्यति त्वाचार्यो नाकारस्थस्याकारस्य लोपः स्यादिति । अतः ककारमनुबन्धं करोति । नैतदस्ति ज्ञापकम् । उत्तरार्थमेतत्स्यात् तुन्दशोकयोः परिमृजापनुदोरिति । यत्तर्हि गापोष्टगित्यनन्यार्थं ककारमनुबन्धं करोति । एकवर्णवच्च * । एकवर्णवच्च दीर्घो भवतीति वक्तव्यम् । किं प्रयोजनम् । वाचा तरतीति द्व्यज्लक्षणः ष्ठन्मा भूदिति । इह च वाचो निमित्तं तस्य निमित्तं संयोगोत्पाताविल्यनुवर्तमाने गो द्व्यच इति द्व्यज्लक्षणो यन्मा भूदिति । अत्रापि गोनौग्रहणं ज्ञापकं दीर्घाद्

---

दिति । यद्याकारस्थस्याकारस्य लोपः स्यात्कित्करणमनर्थकं स्यात् । यत्तर्हीति । नन्वसति कित्त्वे आकारस्थस्याकारस्य लोपे कृते द्वयोरकारयोः पररूपस्य धातुं प्रत्यन्तवद्भावाच्छन्दोगायेत्यत्रातो धातोरित्याकारलोपप्रसङ्गः । नैष दोषः । सन्निपातपरिभाषया लोपो न भविष्यति । अकारं ह्याश्रित्य यशब्दः कृतो लोपस्यानिमित्तम् । दीर्घत्वं तु कष्टायेति निपातनाद्भवति । एकवर्णवदिति । अवयवसंख्याश्रयणेन वाक्शब्दस्य द्व्यच्त्वात्तन्निमित्तं कार्यं प्राप्नोतीत्येकवर्णवदित्यातिदेशः क्रियते । गोनौग्रहणं ज्ञापकमिति । सामान्येन ज्ञापकं वर्णावयवाश्रयकार्याभावस्य ।

---

तत्र दीर्घादित्यस्याभावे कुड्यच्छायेत्यादावपि विकल्पः स्यादिति भावः । असिद्धवदिति । चिणोलुङ्न्यायेनेति भावः । भाष्ये ( उत्तरार्थमेतदिति ) । इह किंचित्तपो हतीति न्यायस्तु नाश्रितः । अत्र केवलाकारोच्चारणे उत्तरत्र ककाराकारयोरुच्चारणे गौरवादिति भावः । सन्निपातेति । न च दीर्घेणैव स निवर्तितो, दीर्घेऽप्यत्वजातिसंबन्धसत्त्वेन न तथा सन्निपातक्षतिः । लोपे तु तस्यापि निवृत्तेस्तद्विरोधस्य स्पष्टत्वादिति भावः । परे तु जातिपक्षे तपरसूत्रं व्याप्यजातिनिर्देशस्यैव बोधकमिति । यत्त्वनिमित्तसन्निपातस्य दीर्घेण निवृत्तिर्जातेव न कस्याप्यनुवृत्तिस्तस्माद्व्याप्यात्वजातियजादिसंनिपातनिमित्तो दीर्घो न स्वसंनिपातविघातकलोपनिमित्तं संनिपातपरिभाषायाश्च स्वप्रवृत्तेः प्राङ् निमित्तभूतो यादृशः संनिपातः स्वातिरिक्तस्तद्विघातकस्य स्वयमनिमित्तमित्यर्थः । मात्राकालिकत्वसमानाधिकरणव्यापकजातिनिर्देशपक्षे ऽप्यङ्गसंज्ञा तद्वनिमित्तं स्यादिति कृन्मेजन्तसूत्रवक्ष्यमाणभाष्यरीत्या यादेशनिमित्तसंनिपातस्य न लेशतोपि सत्तेति वदन्ति । प्रातर्न्ष्टं तं तद्ल्टकार इत्यादौ रोरि तोर्लीति तु नापादितं तस्याभितोऽभागसत्त्वेन तेन व्यवधानात्तदप्राप्तेः । अग्ने इन्द्रेत्यादौ सवर्णदीर्घव्यावृत्तये आह । सामान्येनेति । गोहरतो संख्येति गोग्रहणं नौहरचष्टन्निति नौग्रहणम । वर्णा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्व्यज्लक्षणो विधिर्न भवतीति । अयं तु सर्वेषामेव परिहारः । नाऽव्यपवृक्त-स्यावयवस्य तद्विधिर्यथा द्रव्येषु * । नाऽव्यपवृक्तस्यावयवस्यावयवाश्रयो विधिर्भवति यथा द्रव्येषु । तद्यथा । द्रव्येषु सप्तदश सामिधेन्यो भवन्तीति न सप्तदशारत्निमात्रं काष्ठमग्नावभ्याधीयते । विषम उपन्यासः । प्रत्यृचं चैव हि तत्कर्म चोद्यते । असंभवश्चाग्नौ वेद्यां च । यथा तर्हि सप्तदश प्रादेशमात्रीराश्वत्थीः समिधोऽभ्यादधीतेति न सप्तदशप्रादेशमात्रं काष्ठम-ग्नावभ्याधीयते । अत्रापि प्रतिप्रणवं चैतत्कर्म चोद्यते । तुल्यश्चासंभवो ऽग्नौ वेद्यां च । यथा तर्हि तैलं न विक्रेतव्यं मांसं न विक्रेतव्यमिति व्य-

---

अग्नएहीत्यादावेङः पदान्तादतीत्याद्यपि न भवति । नाव्यपवृक्तस्येति । व्यपवर्गो व्यपवृक्तं भेदः । तेनाव्यपवृक्तस्याभिन्नबुद्धिविषयस्यैकत्वालम्बनज्ञानग्राह्यस्य समु-दायस्य यो ऽवयवस्तस्मिंस्तद्विधिः पृथग्भूतवर्णविधिर्न भवतीत्यर्थः । अव्यपवृक्त-स्यावयवस्येति । व्यधिकरणे षष्ठ्यौ अव्यपवृक्तस्य समुदायस्य योवयवस्तस्येत्यर्थः । नहि सम्भवमात्रेण कार्याणि क्रियन्ते ऽपि तु यत्र तद्बुद्धिरस्ति तत्रैवेत्यर्थः । मा-न भोक्तव्या इति निषेधस्तु मिश्रेष्वपि प्रवर्त्तते तत्र तद्बुद्धिस्तद्रसास्वादनसम्भवात् । सप्तदशेति । सामिधेनीशब्द ऋचां वाचक उपचारात्काष्ठेषु वर्त्तते तत्र सप्तदशहस्ते काष्ठे सप्तदशकाष्ठानीति बुद्धेरभावान्न तस्याभिधानम् । असम्भव इति । अर्द्धचतुर्ह-

---

वयवाश्रयकार्याभावस्येति । वर्णावयवेषु भेदेनाप्रतिभाससमानेषु वर्णाश्रयकार्याभा-वस्येत्यर्थः । तेन मातॄणामित्यादौ णत्वादिसिद्धिः । भेदेन प्रतिभासात् । सामान्या-पेक्षज्ञापकं विनापि न्यायेन निर्वाहमाह । भाष्ये ( अयन्त्विति ) । अभिन्नबुद्धि-विषयस्येत्यस्य व्याख्या एकत्वालम्बनज्ञानग्राह्यस्येति । समुदायस्य योऽवय-वइति । वर्णसमुदायस्येत्यर्थः । व्यधिकरणेइति । सामानाधिकरण्येनान्वये ऽव्यपवृक्त-स्येति व्यर्थं सर्वस्याप्यवयवस्यावयविनाव्यपवृक्तत्वादिति भावः । भाष्ये ( अवय-वाश्रयः ) । अवयवसदृशस्तन्त्ववर्णाश्रयः । उक्तेर्थे युक्तिमाह । नहीति । ननु सा-मिधेनीशब्दस्य ऋक्षु शक्तत्वेन काष्ठमग्नावाधीयत इति भाष्यमयुक्तमत आह साहचर्यादिति । तदाधेयत्वेनेति भावः । तत्रसप्तदशेति । यद्यपि एकैका समिद-रत्निमात्रमिति मिलितानां सप्तदशानां समिधां सप्तदशारत्निमात्रत्वं भवति एक-स्यापि तावत्त्वमस्ति तथाप्यव्यपवृक्तसमुदायावयवत्वात् न व्यपवृक्ताश्रयकार्यप्रसक्ति-रिति भावः । न ह्यव्यपवृक्तत्वमात्रनिबन्धनं तदनभ्याधानं किं तु असंभवनिबन्ध-नमित्याह । भाष्ये ( विषमइति ) । आहितपुनर्ग्रहणस्य निषिद्धत्वादेकस्य का-ष्ठस्य प्रत्यृचमाधानं न संभवतीति भावः । युक्त्यन्तरमाह । असंभवश्चेति । तदु-पादयति । अर्धचतुर्हस्तेति । अर्धेन चतुर्हस्तेति तृतीयातत्पुरुषः । समिधोऽभ्या-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पवृक्तं च न विक्रीयते । अव्यपवृक्तं गावः सर्षपाश्च विक्रीयन्ते । तथा लोम नखं स्पृष्टा शौचं कर्तव्यमिति व्यपवृक्तं स्पृष्ट्वा नियोगतः कर्त्तव्यम्। अव्यपवृक्ते कामचारः। यत्र तर्हि व्यपवर्गोऽस्ति । क्व च व्यपवर्गोऽस्ति । सन्ध्यक्षरेषु। सन्ध्यक्षरेषु विवृतत्वात् * । यदत्रावर्णं विवृततरं तदन्यस्मादवर्णाद्येऽपीवर्णोवर्णे विवृततरे ते अन्याभ्यामिवर्णोवर्णाभ्याम्। अथवा पुनर्न गृह्यन्ते । अग्रहणं चेन्नुड्विधिलादेशविनामेषु ऋकारग्रहणम् * । अग्रहणं चेन्नुड्विधिलादेशविनामेषु ऋकारग्रहणं कर्त्तव्यम्। तस्मान्नुड् द्विहलः। ऋकारे चेति वक्तव्यम्। इहापि यथा स्यात् आनृधतुः, आनृधुरिति। यस्य पुनर्गृह्यन्ते द्विहल इत्येव तस्य सिद्धम् । यस्यापि न गृह्यन्ते तस्याप्येष न दोषः। द्विहल्ग्रहणं न करिष्यते। तस्मान्नुड् भवतीत्येव। यदि न क्रियते।

---

स्ता हि वेदिः। यथा तर्हीति। अल्पप्रमाणत्वात्स्यात्सम्भव इति भावः। अव्यपवृक्तमिति। व्यपवर्गस्याभावेनेत्यर्थः। यत्र तर्हीति। ऐ औ इत्यत्र हि स्फुटो ऽकारप्रतिभासोऽस्ति। विवृतत्वादिति। अकारस्य विवृतोपदेशादत्र प्रकर्षो विवक्षितस्तदाह। विवृततरामिति । तत्र प्रयत्नभेदादसावर्ण्यादिकारेण संध्यक्षरावयवस्य ग्रहणं नास्तीत्यर्थः। तदेवमाकारादिस्थस्यावयवस्य भेदेनाग्रहणादग्रहणं संध्यक्षरस्थस्य त्वसावर्ण्यात् । ऋकारस्थस्तु रेफो भेदेन प्रतिभासाद् गृह्यते इति नुडादिसिद्धिः। अथवेति। नरसिंहवद्वर्णान्तरत्वात्सादृश्याच्च प्रत्यभिज्ञानात्तत्त्वासिद्ध्या पृथगुपलब्धानां वर्णानां समुदाये नास्ति सत्त्वम् । समुदायवाचोयुक्तिरपि तत्र वर्णान्तरे

---

दिवद्विर्भावनिषेधाच्चासंभव इति भावः। अव्यपवृक्तमिति। अर्थाभावे ऽव्ययीभावः तदाह। व्यपवर्गस्येति। वस्तुतस्तत्पुरुष एवायं व्यपवृक्तभिन्नतैलमांसरूपा गावः सर्षपाश्चेत्यर्थः। नञाऽव्ययीभावस्याभावादित्यग्रे वक्ष्यते। भाष्ये (कामचार इति)। स्पर्शे कामचारस्तेन शौचाभाव इत्यर्थः। एङोः संश्लिष्टावर्णत्वेन व्यपवर्गस्याप्पृष्टत्वात्संध्यक्षरग्रहणमैजभिप्रायमित्याह। ऐऔ इति। अकारस्येति । यद्यप्यैचो विवृततमास्तथापि विवृततरत्वमस्त्येवेति भावः। प्रयत्नभेदादेव एङैचोः परस्परं सावर्ण्याभावः। एङो विवृततरत्वादैचां विवृततमत्वादिति बोध्यम्। नुडादीति। आनृजे इत्यत्र नुट्। आदिना चक्लृपे इत्यत्र लत्वं मातॄणामित्यादौ णत्वञ्चेति बोध्यम्। सादृश्याच्चेति। चस्त्वर्थे। समुदाये सन्ध्यक्षरादौ, सत्यपि गोसादृश्ये गवये गोत्वस्येव सन्ध्यक्षराद्यवयवेषु अत्वादिजात्यभावादकारादिग्रहणेन ग्रहणं नेति भावः। ऐकारादौनामिकेच्छाप्रयत्नजन्यत्वेनैकत्वमेव अकारादिवत्। अत एवैषां पदवन्न वर्णसमूहत्वेन प्रतिभास इति, तदेवाह। समुदायवाच इति । भ्रान्तिवशादिति। भ्रान्तिगृहीतावयवसद्भावाश्रयेणेत्यर्थः। एवञ्च भ्रान्तिरेव ग्रहणपक्षे बीजमिति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आटतुः, आटुरित्यत्रापि प्राप्नोति । अश्नोतिग्रहणं नियमार्थं भविष्यति। अश्नोतेरेवावर्णोपधस्य नान्यस्यावर्णोपधस्येति । लादेशे च ऋकारग्रहणं कर्त्तव्यम् । कृपो रो लः, ऋकारस्य चेति वक्तव्यम् । इहापि यथा स्यात्क्लृप्तः क्लृप्तवानिति । यस्य पुनर्गृह्यन्ते र इत्येव तस्य सिद्धम् । यस्यापि न गृह्यन्ते तस्याप्येष न दोषः । ऋकारोप्यत्र निर्दिश्यते । कथम् । अविभक्तिको निर्देशः कृप उः रः लः कृपो रो ल इति । अथवा उभयतः स्फोटमात्रं निर्दिश्यते । रश्रुतेर्लश्रुतिर्भवतीति । त्रिनामे ऋकारग्रहणं कर्त्तव्यम् । रषाभ्यां नो णः समानपदे ऋकाराच्चेति वक्तव्यम् । इहापि यथा स्यात् । मातॄणां पितॄणामिति । यस्य पुनर्गृह्यन्ते । रषाभ्यामित्येव तस्य सिद्धम् । न सिध्यति । यत्तद्रेफात्परं भक्तेः तेन व्यवहितत्वान्न प्राप्नोति।

---

न तात्त्विकी भ्रान्तिवशात्त्ववयवसद्भावाश्रयेण प्रवृत्ता । अश्नोतेरेवेति । सामान्येनावर्णोपधो निवर्त्यते न त्वश्नातिरेव सामान्यापेक्षत्वान्नियमज्ञापकस्य । अविभक्तिक इति। तत्र ऋकारनिर्देशसामर्थ्याद्विभागं प्रकल्प्यादेशो विधीयते । स्फोटमात्रमिति । जातिस्फोट इत्यर्थः । ततश्चान्तर्भूतानन्तर्भूतरेफलकारव्यङ्ग्यं सामान्यं स्थान्यादेशभावेनाश्रीयते । यत्तदिति । रेफाद्भक्तेरिति समानाधिकरणे पञ्चम्यौ । अङ्गवाचे

---

भावः । अत एव गोनौग्रहणञ्चरितार्थम् । विनामो णत्वम् । ननु विकरणविशेषनिर्देशेन श्नाविकरणनिवृत्त्यर्थं सूत्रं स्यादत आह । नत्वश्नातिरेवेति । तथा सति नाश्न इत्येव वदेदिति भावः । नियमज्ञापकस्य । नियमबोधकस्य । नन्वेकवर्णपक्षे ऋकारप्रश्लेषेपि कथं सिध्यतीत्यत आह । तत्र ऋकारेति । एवञ्च रेफपदेन तत्सदृश आरोपितरेफत्ववानपि गृह्यत इति फलितम् । मात्रशब्दः सामान्याभिप्राय इत्याह । जातीति । जातिश्चावयवानवयवसाधारणीत्याशयेनाह । ततश्चेति । एवंविधा च रत्वलत्वजातिरेवेत्यतिप्रसङ्गो न, स्थान्यादेशभावश्च जातेर्व्यवहारको बोध्यः । वस्तुतः स्फोट एव श्रोत्रग्राह्यो वायुनिष्ठरत्वादिना च तस्याभिव्यक्तिः एवञ्च साक्षाद्रत्ववतोभावेन कल्पत इत्यत्राप्यप्रवृत्तावस्य वैयर्थ्यापत्तिः । एवञ्च रेफावभासिनः स्फोटस्य प्रसङ्गे लकारावभासः स्फोट इत्यर्थः । एवञ्च क्लृपावपि तत्प्रवृत्तिः संभवत्येव । तत्रापि रेफावभाससत्वात् । आकारादौ तु नैवं रूपावभास इति न तत्राकारावभासप्रयुक्तकार्यापत्तिः । तदुक्तं, रश्रुतेरित्यादि । यत्तु स्वतन्त्रास्वतन्त्रसाधारणजातिपरतयैतद्भाष्यव्याख्यानं तन्न । तादृशजातौ मानाभावात् । नरसिंहदृष्टान्तानुपपत्तेश्च । सादृश्यात्तु प्रत्यभिज्ञेत्यादिस्वोक्तिविरोधापत्तेश्च । किं चैवं सति रजातेरित्येव भगवान्वदेत् । किं च तादृशजातिमत्वे ऋदेशानामपि तज्जातिमत्वेन वर्णग्रहणेन ग्रहणपक्षस्यैव सिद्ध्या ग्रहणे

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मा भूदेवम् । अड्व्यवायइत्येव सिद्धम् । न सिध्यति । वर्णैकदेशाः के वर्णग्रहणेन गृह्यन्ते । ये व्यपवृक्ता अपि वर्णा भवन्ति । यच्चापि रेफात्परं भक्तेः न तत्क्व चिदपि व्यपवृक्तं दृश्यते । एवं तर्हि योगविभागः करिष्यते रषाभ्यां नो णः समानपदे । ततो व्यवाये । व्यवाये च रषाभ्यां नो णो भवतीति । ततोऽट्कुप्वाङ्नुम्भिरिति । इदमिदानीं किमर्थम् । नियमार्थम् । एतैरेवाक्षरसमाम्नायिकैर्व्यवाये नान्यैरिति । यस्यापि न गृह्यन्ते तस्याप्येष न दोषः । आचार्यप्रवृत्तिर्ज्ञापयति । भवत्यृकारान्नो णत्वमिति । यदयं क्षुभ्नादिषु नृनमनशब्दं पठति । नैतदस्ति ज्ञापकम् । वृद्ध्यर्थमेतत्स्यात् । नार्नमनिः । यत्तर्हि तृप्नोतिशब्दं पठति । यच्चापि नृनमनशब्दं पठति । ननु चोक्तं वृद्ध्यर्थमेतत्स्यात् । बहिरङ्गा वृद्धिरन्तरङ्गं णत्वम् । असिद्धं बहिरङ्गमन्तरङ्गे । अथवा उपरिष्टाद्योगविभागः करिष्यते । ऋतः नो णो भवति । ततश्छन्दस्यवग्रहात् । ऋत इत्येव । प्लुतावैच

---

इति । ऋकारेण यथा दीर्घो गृह्यते एवमृकारभागोपीत्यर्थः । न सिद्ध्यतीति । तस्य भागस्य स्फुटप्रतिभासाविषयत्वाज्जात्यभिव्यक्तिहेतुत्वाभावाच्चेति भावः । एतैरेवेति । आकारादयो ऽप्यकारादिभिः प्रत्यायितत्वादाक्षरसमाम्नायिकाः । भक्ति-

---

श्चमुक्ताथ वा न गृह्यन्त इति पक्षे तत्समाधानपरभाष्यासङ्गतेः । अत एवाष्टमे रषाभ्यामिति सूत्रे यथा नरसिंहावयवानां नरत्वसिंहत्वजातियोगाभावात्पुरुषमृगराजाभ्यामेकाकृतियोगाभावः एवं वर्णवर्णैकदेशयोरपीति कैयट आहेति वदन्ति । ऋकारेणेति । ऋकारावयवस्य रेफस्येव तदज्भागस्यापि केन चिदकारादिना ग्रहणादट्त्वमिति मन्यते । जात्यभिव्यक्तीति । अत्वादिजातीत्यर्थः । एवञ्च न केनाप्यचा तद्ग्रहणमिति भावः । अत्र जात्यभिव्यक्तिहेतुत्वाभावे स्फुटप्रतिभासाविषयत्वं हेतुः । चो हेतौ । अतो न सिद्ध्यतीत्यर्थः । नन्वाकारादिभिर्व्यवायेपि न स्यादाक्षरसमाम्नायिकत्वाभावादत आह । आकारादयोपीति । भक्तिस्त्विति । असवर्णत्वादनुपदेशाच्चेति भावः । भाष्ये ( नृनमनशब्दमिति ) । सञ्ज्ञाभूतमित्यभिप्रायः । गन्धर्वगानमित्यादौ सुबुत्पत्तेः पूर्वं समासेपि णत्ववारणायाखण्डपदे इत्यर्थकसमानपदे इत्यत्र पदस्यार्थबोधकस्यैव ग्रहणेन सखण्डत्वे ऽसञ्ज्ञायां णत्वप्राप्त्यभावादिति बोध्यम् । छन्दस्यृदित्यस्य तु नात्र प्राप्तिः । ईदृशे विषये ऽवग्रहाभावादित्याहुः । बहिरङ्गावृद्धिरिति । त्रिपाद्यामपि बहिरङ्गपरिभाषा प्रवर्त्तत इति वार्त्तिकमतेनैतत् । भाष्यमते तु तृप्नोतिशब्दपाठस्यैव ज्ञापकता बोध्या । ऋतोनोणइति । मातॄणामित्यादौ दीर्घस्य बहिरङ्गासिद्धत्वाण्णत्वम् । यद्वा प्रश्लिष्टनिर्देशाण्णत्वम् । अत्र तपरत्वं सुखसुखार्थमेव । उत्तरत्रा ऽप्येवमेव फलाभावाद् । ध्वनितञ्चेदं वृत्तौ । ननु गुर्वव्यवटेरित्यर्थाङ्गीकारे गुरुरूपटेः प्लुतो न स्यादत

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इद्रुतौ । एतच्च वक्तव्यम् यस्य पुनर्गृह्यन्ते गुरोष्टेरित्येव प्लुत्या तस्य सिद्धम् । यस्यापि न गृह्यन्ते तस्याप्येष न दोषः । क्रियते न्यास एव । तुल्यरूपे संयोगे द्विव्यञ्जनविधिः * । तुल्यरूपे संयोगे द्विव्यञ्जनाश्रयो विधिः सिध्यति । कुक्कुटः । पिप्पली । पित्तमिति । यस्य पुनर्गृह्यन्ते तस्य द्वौ ककारौ द्वौ पकारौ द्वौ तकारौ । यस्यापि न गृह्यन्ते तस्यापि द्वौ ककारौ द्वौ पकारौ द्वौ तकारौ । कथम् । मात्राकालो ऽत्र गम्यते । न च मात्रिकं व्यञ्जनमस्ति । अनुपदिष्टं सत्कथं शक्यं विज्ञातुम् । असच्च कथं शक्यं प्रतिपत्तुम् । यद्यपि तावदत्रैतच्छक्यते वक्तुं यत्रैतन्नास्त्यण् सवर्णान् गृह्णातीति, इह तु कथम् । सय्ँ यन्ता । सव्ँ वत्सरः । यल्ँ लोकम् । तल्ँ लोकमिति । यत्रैतदस्त्यण् सवर्णान् गृह्णातीति । अत्रापि मात्राकालो गृह्यते । न मात्रिकं व्यञ्जनमस्ति । अनुपदिष्टं सत्कथं शक्यं विज्ञातुमसच्च कथं शक्यं प्रतिपत्तुम् । हयवरट् ॥ ५ ॥ सर्वे वर्णाः सकृदुपदिष्टा अयं हकारो द्विरु

---

स्तु न प्रत्याय्या न प्रत्यायिकेति नियमेन न निवर्त्यते । गुरोष्टेरिति । ऐकारो गुरुस्तस्य टेरिति सिद्धम् । तन्त्रन्यायाश्रयणाच्च गुरोरपि स्थाने प्लुतो भवति देवदत्तेति । क्रियते न्यास एवेति । अवश्यकर्तव्यतां दर्शयति । व्यपवृक्तेपि भागयोर्विवृततरत्वात् । प्रयत्नभेदादिकारोकाराभ्यामग्रहणादच्त्वाभावात् । तुल्यरूपेति तुल्यरूपावयवत्वात्संयोगस्तुल्यरूपः । तस्यैकवर्णत्वं पूर्वपक्षे । सिद्धान्ते तु वर्णद्वयरूपता । आशूच्चारणात्तु भ्रान्तमेकत्वज्ञानमिति शिष्टसमाचारः । अत्रापीति सानुनासिकनिरनुनासिकौ द्वावत्र वर्णावित्यर्थः । हयवरट् ॥५॥ पूर्वश्चेति । पूर्वपरो

---

आह । तन्त्रेति । स्थानषष्ठ्यन्तावयवषष्ठ्यन्तयोर्गुरुशब्दयोरित्यर्थः । गुर्ववयवटित्वं एव संभवति नान्यस्य आकारादेस्तदवयवस्य व्यपवृक्तत्वाभावादिति भावः । त्वाभावादिति । तन्मूलटित्वाभावाच्चेत्यपि बोध्यम् । संयोगइति । संयोगसञ्ज्ञ इत्यर्थः । तस्यैकवर्णत्वमिति । एवञ्च संयोगसञ्ज्ञा न स्यादिति भावः । ( संयो इति ) भाष्यन्तु संयोगार्हं इत्यर्थपरमिति तात्पर्यम् । शिष्टसमाचारः । शिष्टव्यवहारः । भाष्ये ( मात्राकालोचेति ) । बहुव्रीहिः संयोगो ऽन्यपदार्थः । मात्रिकव्यञ्जनाभावे ऽनुपदिष्टत्वं हेतुः कुक्कुट इत्याद्युच्चारणं तु न ऽपदेशः । अनुपदिष्टं नाम अक्षरसमाम्नाये ऽपठितत्वं ग्राहकशास्त्रेणागृहीतत्वञ्च । ( अनुपदिष्टं सत् ) सत्त्वेन कथं शक्यं विज्ञातुमित्यर्थः । एवञ्चानुपदिष्टस्यासत्त्वात् तत्प्रतिपत्तिरशक्येत्याह । असच्चेति । क्वचित्तु असच्चेत्यादिग्रन्थो न दृश्यते अनेन लृकारापाठे तत्सत्त्वशङ्कया तयोः सावर्ण्यविधिरप्यशक्य इति सूचितम् । यत्रैतदस्तीति । भाष्ये हलोनन्तरा इत्यत्र यकारादिभिरस्य ग्रहणे लक्ष्याभाव इति भावः । सानुना

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दिश्यते । पूर्वश्चैव परश्च । यदि पुनः पूर्व एवोपदिश्येत पर एव वा । कश्चात्र विशेषः । हकारस्य परोपदेशे ऽड्ग्रहणेषु हग्रहणम् * । हकारस्य परोपदेशे ऽड्ग्रहणेषु हग्रहणं कर्त्तव्यम् । आतोऽटि नित्यम् । शश्छोऽटि । दीर्घादटि समानपादे । हकारे चेति वक्तव्यम् । इहापि यथा स्यात् । महाँ हि सः । उत्त्वे च * । उत्त्वे च हकारग्रहणं कर्त्तव्यम् । अतो रोरप्लुतादप्लुते । हशि च । हकारे चेति वक्तव्यम् । इहापि यथा स्यात् । पुरुषो हसति ब्राह्मणो हसतीति । अस्तु तर्हि पूर्वोपदेशः । पूर्वोपदेशे कित्त्वक्त्सेड्विधयो झल्ग्रहणानि च * । यदि पूर्वोपदेशः कित्त्वं विधेयम् । स्निहित्वा स्नेहित्वा । सिस्निहिषति । सिस्नेहिषति । रलो व्युपधाद्धलादेः संश्चेति कित्त्वं न प्राप्नोति । क्सविधिः । क्सश्च विधेयः । अघुक्षत् । आलिक्षत् । शल इगुपधादनिटः क्स इति क्सो न प्राप्नोति । इड्विधिः । इट् च विधेयः । रुदिहि । स्वपिहि । वलादिलक्षण इण् न प्राप्नोति । झल्ग्रहणानि च

---

णाक्रियाभेदादेकस्यैव हकारस्य पूर्वपरव्यपदेशः । शश्छोटीति । हकारपरशकारस्यासम्भवात् प्रसङ्गोच्चारितमेतत् । उत्त्वे चेति । अशूत्वार्थमपि वक्तव्यं मो हसकेति । अणुदित्सूत्रं हि विद्यमानस्य लोकसिद्धस्य सवर्णस्य ग्राहकमेव न त्वप्रसिद्धसवर्णकल्पकमिति भावः । हयवरट् ॥५॥ नन्वयं हकार इत्यनेनैकत्वं हकारस्य सूचितमिति कथं तद्विरुद्धं पूर्वश्चेत्यादिना भेदाश्रयणमत आह । पूर्वपरेति । एतद्भाष्यादेकत्वं वर्णानामित्येव पक्षो भगवतः संमत इति ज्ञायते । भाष्ये ( यदिपुनरिति ) । न चैवं परहकाराभावे लकारस्याप्यभावेन तन्नाद्याश्रयणेन हलन्त्यमित्यत्रान्योन्याश्रयपरिहारो वक्ष्यमाणो विरुध्येतेति वाच्यम् । रन्त्यं हरिति न्यासेन लन्त्यं हलिति न्यासेन वा तत्परिहाराल्, लाघवाभावेपि एवं कर्त्तुं शक्यं न वेत्येवं विचारतात्पर्यात । यद्वा हरन्त्यमित्यस्यैवाहृत्याह । बोधकसूत्रसमुदायान्त्यमिदित्यर्थः । परे तु परहकाराभावेपि ल् इत्येव सूत्रं कार्यं प्रातिशाख्यादिप्रसिद्धहलादिप्रत्याहारसिद्ध्यर्थं तदर्थं रान्तस्यापि शक्तिकल्पने गौरवाद् हलन्त्यमित्यस्यावृत्त्या हल्प्रत्याहारबोधकसूत्रसमुदायान्त्यमिदित्तरप्यर्थंदोष इत्याहुः । अड्ग्रहणेष्विति । अड्गृह्यते येषु सूत्रेष्वित्यर्थः । शश्छोटीत्यस्योदाहरणादाने बीजमाह । हकारपरस्येति । न च तच् श् हित्याहेत्युदाहरणसंभवः । शास्त्रबोधितं सौत्रत्व विहाय हलामुच्चारणार्थाचं विनोच्चारणस्यासाधुत्वेन तादृशोदाहरणाभाव इत्याशयात् । अत्र च भाष्ये एतदुदाहरणादानमेव मानम् । आतो ऽटि दीर्घादटीत्युभयोरुदाहरणं महां हि स इति । अट्कुप्विति सूत्रेपि ग्रहणफलमहेणेति बोध्यम् । अशत्वसपोति । इदमिण्त्वस्याप्युपलक्षणन्तेन लिलिहढ्वे इत्यत्रादौ विभाषेट इति ढत्वविकल्पसिद्धिरिति केचित् । भाष्ये ( हशिचेति ) । सिद्धा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

किम् । अहकाराणि स्युः । तत्र को दोषः । झलो झलीतीह न स्यात् अदाग्धम् । तस्मात्पूर्वश्चैवोपदेष्टव्यः परश्च । यदि च किं चिदन्यत्र प्युपदेशे प्रयोजनमस्ति तत्राप्युपदेशः कर्त्तव्यः । इदं विचार्यते । अयं रेफो यकारवकाराभ्यां पूर्व एवोपदिश्येत हरयवडिति । पर एव वा यथान्यास मिति । कश्चात्र विशेषः । रेफस्य परोपदेशेनुनासिकद्विर्वचनपरसवर्णप्रति षेधः * । रेफस्य परोपदेशे अनुनासिकद्विर्वचनपरसवर्णानां प्रतिषेधो वक्त व्यः । अनुनासिकस्य । स्वर्नयति । प्रातर्नयति । यरो ऽनुनासिके ऽनुना सिको वेत्यनुनासिकः प्राप्नोति । द्विर्वचनस्य । मद्रहृदः भद्रहृदः । यर इति द्विर्वचनं प्राप्नोति । परसवर्णस्य । कुण्ड रथेन । वनं रथेन । अनुस्वारस्य ययीति परसवर्णः प्राप्नोति । अस्तु तर्हि पूर्वोपदेशः । पूर्वोपदेशे कित्त्वप्र तिषेधो व्यलोपवचनं च * । यदि पूर्वोपदेशः, कित्त्वं प्रतिषेध्यम् । दिदि त्वा दिदेविषति । रलोव्युपधादिति कित्त्वं प्राप्नोति । नैष दोषः । नैवं विज्ञायते रलो व्युपधादिति । किं तर्हि, रलः अवव्युपधादिति । किमिद मवव्युपधादिति । अवकारान्ताद् व्युपधादवव्युपधादिति । व्यलोपवचनं च

---

तीति रोर्यत्वार्थम् । यदि च किं चिदिति । प्रयोजनार्थोपि वर्णानामुपदेशो न स्व रूपप्रतिपत्त्यर्थः । इदमिति । उभयत्रापि दोषप्रयोजनसद्भावात्प्रश्नः । स्वर्नयतीति णकारो ऽत्र प्राप्नोति । न ह्यत्र सवर्णग्रहणमस्ति । मद्रह्रद इति । द्विर्वचने कृ तस्यासिद्धत्वाद्रोरीति रेफलोपो नास्ति । हलो यमामिति लोपस्तु पाक्षिक इति प रेफद्वयश्रवणप्रसङ्गः । कुण्ड रथेनेति । अनुनासिकेनैव परसवर्णेन भाव्यमिति नि

---

न्तरीत्यानिर्देशः । इदानीन्तु यश्चेति सूत्रम् । अहकाराणि स्युरिति । अतस्त हकारग्रहणं कर्त्तव्यमिति भावः । अदाग्धमिति । धत्वस्यासिद्धत्वादिति भावः स्वरूपप्रतिपत्त्यर्थं एवायमक्षरसमाम्नाय इति भ्रमं वारयति । भाष्ये [ यदि चिदिति]। तद्व्याचष्टे । प्रयोजनार्थइति। शास्त्रीयप्रयोजनार्थं इत्यर्थः। एवञ्चाव कारस्याग्रिमेऽपि प्रयोजनं सूचितम् । अत एव मह्वा हसन्तीति प्रयोगादि सूत्रे भाष्यप्रयोगः सङ्गच्छते । एतेन पूर्वहकारोपदेशप्रयोजनवार्त्तिके न्यूनता परि हृता । कर्त्तव्य इत्यस्य स्यादिति शेषः । उपदेशोच्चारणमात्रम् । अन्यत्रापि प्रत्याहारान्तरे । सर्वथा हकारस्य द्वेधोपदेशः कर्त्तव्य इत्यत्रास्य तात्पर्यम् । दोषप्र योजनेति । अन्यतरपक्षीयदोष एवान्यतरपक्षे प्रयोजनमिति बोध्यम् । णकारो ति । स्थाने ऽन्तरतमत्वादिति भावः । ननु रेफस्य सवर्णाभावात्कथमत्रानुना को ऽत आह । नह्यत्रेति । ननु द्वित्वेपि रोरीति हलोयमामिति वा लोपात् षो ऽत आह । द्विर्वचनइति । भाष्ये (अवव्यपधादिति)। अव इति लुप्तपञ्चमीक

व्योश्च लोपो वक्तव्यः। गौधेरः पचेरन्। यजेरन्। जीवेरदानुक्। जीरदानुः। वलीति लोपो न प्राप्नोति। नैष दोषः। रेफोऽप्यत्र निर्दिश्यते। लोपो व्योर्वलीति रेफे च वलि चेति। अथ वा पुनरस्तु परोपदेशः। ननु चोक्तं रेफस्य परोपदेशे ऽनुनासिकद्विर्वचनपरसवर्णप्रतिषेध इति। अनुनासिकपरसवर्णयोस्तावत्प्रतिषेधो न वक्तव्यः। रेफोष्मणां सवर्णा न स-

---

मामावाद्रेफः प्राप्नोति। तस्य चासिद्धत्वाद्रोरीति लोपो नास्ति। रेफोष्मणामिति। अनुनासिकपरसवर्णविधाने हि स्थानेन्तरतमपरिभाषोपस्थानाद्दोषाभावः। नहि रेफस्य णकारो ऽन्तरतमः नाप्यनुस्वारस्य रेफः। नेमौ रहाविति। हकारवद्रेफोरि न

---

ननु पूर्वोपदेशे इग्यण इत्यादौ यथासङ्ख्यनिर्वाहः कथमिति चेन्न। सञ्ज्ञाविधान सामर्थ्येन तच तद्भावितपक्षाश्रयणान्न दोषः। भाष्ये(रेफोष्मणामिति) विजातीया इति शेषः। तेन सजातीयेषु सत्स्वपि न दोषः। ननुमाभूद्रेफस्य विजातीयः सवर्णस्तथाप्यनुनासिकविधौ सवर्णग्रहणाभावादनुनासिकः स्यादेवेत्यत आह।

---

* दोषाभाव इति। सप्तम्यन्तपाठाभावे तु अनुनासिकविधौ सवर्णपदापकर्षपरं भाष्यम्। वि० परसवर्णविधौ त्वण इत्यतो ऽनुनासिक इत्यस्य सबन्धात्कुण्डं रथेनेत्यादावदोष इति वृहद्विवरणे। न बाध्यतइति। विवरणकारास्तु तक्रकौण्डिन्यन्यायस्यानवकाशविषयत्वं वदन्त उत्सर्गविषये ऽपवादस्य चारितार्थ्याभावे एव बाधकत्वमिच्छन्ति। तत्रोत्सर्गविषयत्वं च तत्प्राप्तितत्प्रवृत्त्यन्यतररूपम्। प्राप्तिश्च तात्कालिकज्ञानगोचरयावदुद्देश्यतावच्छेदकाक्रान्तिः। प्रवृत्तिश्च विधेयतावच्छेदकसम्बन्धेन विधेयवैशिष्ट्यम्। सर्व आम् इत्यवस्थायां नुटः प्राप्तेः सर्वे नामिति स्थितौ प्रवृत्तेश्च सत्वेन नुटः पूर्वं तदुत्तरं च तद्विषयत्वमक्षतमेवेति सुटोनवकाशत्वं सूपपादमेव। प्रकृतेपि यत्र यत्र रेफे द्वित्वनिमित्तत्वं तत्र तत्रानचिचेति द्वित्वकार्यित्वमस्त्येवेति तन्न्यायविषयत्वमक्षतमेव। परं लक्ष्यानुरोधादत्र बाध्यसामान्यचिन्ताश्रयणेन द्वित्वकार्यित्वमात्रस्य बाध इति मद्रह्रदो धात्रंश इत्यादावचो रहाभ्यां यणो मय इत्यपि न भवतः। इकोयणचीत्यत्र तु कार्यित्वं नानवकाशमिति न कथमपि तस्य निमित्तत्वबाधकता शक्योत्प्रेक्षितुमिति तस्मादित्युत्तरस्येत्यादेर्ज्ञापकान्न बाध्यत इति कैयटश्चिन्त्य इति। अत्र ब्रूमः। सत्यमेतदिको यणचीत्यादौ न तक्रकौण्डिन्यन्यायस्य विषय इति परं त्वन्य एवायं माठरपरिवेषणन्यायस्तक्रकौण्डिन्यन्यायाद्येन दध्युदकादौ यण्प्रवृत्तिः प्रदीपकारेणोत्प्रेक्ष्यते। तमेव चावलम्ब्य नेमौ रहावित्यादि भाष्यं प्रवर्तते। यतो मद्रह्रद इत्यादौ द्वित्ववारणं तक्रकौण्डिन्यन्यायेन कथमपि वक्तुमशक्यम्। तन्न्यायेन हि व्याप्यविषयता यैर्यैर्धर्मैरवच्छेद्यते यैर्यैश्च विशेष्यदऽप्रविष्टैः पदार्थैः संकोच्यते तत्सकलविशेषितस्वप्रयोजकपदप्रतिपाद्येतरपरत्वं स्वाश्रयेतरपरत्वं वा व्यापकविषयताप्रयोजकपदस्य सिद्ध्यति। न पुनर्व्याप्याविषयतावच्छेदकधर्मावच्छिन्नेतरपरत्वम्। तथा सति प्रथमद्विर्वचनीयैकाच्पदघटकाच्पदप्रयोज्यविषयताया द्वितीयद्विर्वचनीयाज्[illegible]दिपदप्रयोज्यविषयत्वापेक्षया व्यापकत्वेन तत्प्रयो-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्ति । द्विर्वचनेपि । नेमौ रहौ कार्यिणौ द्विर्वचनस्य । किं तर्हि । निमि

---

कार्यीत्यर्थः । तत्रैकवाक्यतायां सामान्यविशेषविध्योर्लोकव्यवहारादेव शब्दार्थसं

---

अनुनासिकपरेति । नहिरेफस्येति । न च रेफस्य यकारः स्थानेनान्तरतमो भव
वेति वाच्यम् । स्थाने ऽन्तरतमे इति सप्तम्यन्तपाठस्य स्थानप्रयत्नोभयान्तरतम
चिन्मात्रमित्यादौ चरितार्थो ऽनुनासिकविधिः प्रयत्नासदृशे रेफे न प्रवर्त्तते ।
भावात् । नाप्नोति । यद्यप्यन्तरतमानन्तरतमयोः प्राप्तावन्तरतम एवेति स्थानेन्त
म इत्यनेन नियमः कुण्ड रथेनेत्यादौ चानन्तरतमस्यैव प्राप्तिरितीदमयुक्तम् ।
थापि संभवदनुस्वारान्तरतमके ऽङ्कित इत्यादौ चरितार्थःपरसवर्णविधौ रेफे न प्र
र्त्तते इति भावः । इदं जातिपक्षे इति केचित् । वस्तुतो व्यक्तिपक्षेपि तादृशश
चरितार्थो ऽस्यां व्यक्तौ न प्रवर्त्तते इति वक्तुं शक्यन्तदद्यतोक्तोयणचीत्यत्र कै
"द्रव्येपि पदार्थे उत्सर्गापवादभावः संदिग्धत्वाच्छ्रयोरत्येवेति" । केचित्तु स्थाने
रतम इति सप्तम्यन्तपाठप्रत्याख्यानपरभाष्यविरोधेनास्या युक्तेरसंभवदुक्तिकत्वा
किं चैवं सति ऊष्मग्रहणं भाष्ये व्यर्थं स्यात् । तस्मादनुनासिकविधौ सवर्णपदा
कर्षपरं भाष्यं रेफोष्मणामित्यस्य चानुनासिको ऽनुस्वारान्तरतमश्च सवर्णो ना
त्यर्थः । अत एव मह्विसानित्यादौ सूत्ररीत्या स्थानप्रयत्नोभयान्तरतमङ्कारस
वेपि नानुनासिकः । नाज्झलाविति निषेधेन सवर्णत्वाभावादिति भाष्य । अथ इ
हुः । नन्वयत्वादप्रसक्तद्वित्वस्य हस्य ग्रहणमयुक्तमत आह । हकारवदिति । न

---

जकाच्पदस्याद्यज्भिन्नाच्परत्वे आट आटतुरित्यादौ द्वित्वानापत्तेः । इत्थं चानचिचेत्यत्र यर्पदस्
चः परो यरः पूर्वश्च यो रेफस्तदितरयर्परत्वे ऽप्यर्हेणेत्यादौ रेफस्य द्वित्वं प्राप्नोति । एवं तथा
कस्यैवाचो रहाभ्यामित्यत्र संबन्धे ऽपि मद्रह्रद इत्यादौ द्वित्व प्राप्नोत्येव । किं च स्ववैयर्थ्यसं
दकत्वं यत्रानेकशास्त्राणां तत्र तेषां सर्वेषां बाधो बाध्यसामान्यचिन्ता । न ह्यचो रहाभ्या
त्यत्रत्ययत्वावच्छिन्नविषयत्वरेफत्वावच्छिन्नविषयत्वयोः सामानाधिकरण्यमपि येन बाध्यबाध
भावो ऽवकाशमासादयेत् । यणो मय इत्यत्रापि यण्त्वावच्छिन्नोद्देश्यतायां रेफत्वावच्छिन्नवि
त्ततया समं सामानाधिकरण्यमसंभव्येवेति लक्ष्यानुरोधादत्र बाध्यसामान्यचिन्तेत्यादि चिन्त्यमेव
तस्मादत्र द्वित्ववारणोपयोगी भिन्न एव तक्रकौण्डिन्यन्यायान्माठरपरिवेषणन्यायो वाच्यः । स
विषयतयोर्व्याप्यव्यापकभावन्नापेक्षते किं तूद्देश्यतावच्छेदकधर्मयोरेव । परन्तु ययोर्बाध्यबाधक
भावस्तयोरेकप्रकरणस्थत्वमपेक्षितम् । तत्त्वं च यत्किंचिदनुगतरूपावच्छिन्नस्य प्रतिपाद्यत्वेन वि
यत्वं यस्यामिच्छायां तत्प्रयोज्यकृतिविषयत्वम् । भवति च वर्णद्वित्वप्रतिपादनविषयकमहेच्छा पू
कावान्तरेच्छाधीनकृतिगोचरत्वमचो रहाभ्यामित्यारभ्य दीर्घादाचार्याणामित्येतदन्तसूत्रवार्तिका
दम्बकस्येति तद्घटकयर्यणपदयो रेफेतरस्वार्थपरता सूपपादैव । इदं च नैरजिको यणचीत्यादौ
भिन्नाभिन्नप्रकरणस्थानामिति न तत्रास्य विषयः । इत्थं च तस्मादित्युत्तरस्येत्यादेर्ज्ञापक
बाध्यतइति कैयटग्रन्थो रमणीय एवेति दिक् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मिमौ रहौ द्विर्वचनस्य। तद्यथा। ब्राह्मणा भोज्यन्तां माठरकौण्डिन्यौ परिवेविषातामिति। नेदानीं तौ भुञ्जाते। इदं विचार्यते। इमे अयोगवाहा न

---

परिज्ञानात्सामान्यविधेर्विशेषविधिर्बाधकः। प्रत्यक्षश्च विशेषविधिः सामान्यविधिस्त्वनुमेय इति रेफस्य कार्यित्वं निमित्तत्वेन बाध्यते। दध्युदकादौ तु स्थानित्वेन निमित्तत्वमिकस्तस्मादित्युत्तरस्येत्यादेर्ज्ञापकान्न बाध्यते। लक्ष्यास्थित्यपेक्षणाद्वा बाध्यबाधकभावेन क्व चिदपेक्षा नास्ति। यथा चिचीषतीति दीर्घत्वद्विर्वचनयोः। इद-

---

एककर्तृकयोर्भोजनपरिवेषणयोर्युगपदसम्भवादस्तु तत्र बाधः, प्रकृते तु लक्ष्यभेदेन भिन्नवाक्यावगतनिमित्तकार्यभावः किं न स्यात्। यथा ऽवगतकार्यित्वस्यापि इको निमित्तत्वं दध्युदकादावत आह। तत्रेति। लक्ष्यभेदेन कार्यित्वनिमित्तत्वसंभवे ऽपीत्यर्थः। सामान्यविशेषविध्योरेकवाक्यतायामित्यन्वयः। शब्दो वाक्यात्मा। अर्थस्तदर्थः। संबन्धः प्रतिपाद्यप्रतिपादकभावः। तेषां परिज्ञानन्तद्यथा लोकव्यवहारादेव तथा तयोर्बाध्यबाधकभावः संभवेपि भवतीत्येतदपि लोकव्यवहारादेव ब्राह्मणेभ्यो दधि दीयतान्तक्रं कौण्डिन्यायेत्यादिरूपादवगतमित्यर्थः। विशेषसंनिधाने सामान्यशब्दस्य तद्व्यतिरिक्तपरत्वस्य तद्बीजं परिज्ञानवदिति पाठः। एवञ्चाचोरहाम्यामित्यत्र सामान्यविशेषविधित्वाभावेपि तत्र बाधे यद्बीजं तत्प्रकृतेप्यस्त्ये वेत्याह। प्रत्यक्षश्चेति। अविलम्बितप्रतीतिकत्वं प्रत्यक्षत्वम्। विलम्बितत्कत्वं चानुमेयत्वम्। लक्ष्येति। ज्ञापकाल्लक्ष्यानुरोधाद्वा सत्यपि सामान्यविशेषभावे क्वचिद्बाधकत्वं विशेषविधेर्नाश्रीयते जातिव्यक्तिपक्षयोरुभयोरपीति भावः। क्वचिदपेक्षा नास्तीति। बाध्यबाधकभावस्येति शेषः। यथेति। बाध्यबाधकभावाभावे दृष्टान्तोयम्। न तु कार्यित्वनिमित्तत्वयोः समावेश इति बोध्यम्। केचित्तु, तक्रकौण्डिन्यन्यायोपि सामान्यविषयानाक्रान्तविषयाभावरूपानवकाशत्वमूलक एव अस्ति च प्रकृते तत्। न ह्येतद्बोध्यनिमित्तत्वं सामान्ययत्वप्रयुक्तकार्यित्वानाक्रान्ते क्वचिदप्यस्ति सर्वत्राचः परत्वादनचीत्यस्य प्राप्तेरतो ऽयुक्तो लक्ष्यानुरोधात्सामान्येन कार्यित्वबाधः। न चैवमिको यणित्यादौ, मत्वर्थ इत्यादौ सामान्यप्राप्तनिमित्तत्वाभावेन कार्यित्वस्य चारितार्थ्यादिति भाष्याभिप्रायमाहुः। ननु कार्यार्थ इत्यत्र कार्यं साधुत्वं चेत् खरवसानयोरित्यादिनासिद्धमत आह। विधानादिति। उपदिश्यन्त इति पाठे भाष्ये वर्त्तमानसामीप्ये लट्। उपदिष्टा इत्यर्थः। प्रवृत्तिनिमित्तेति। प्रकृते भासमानवैशिष्ट्यप्रतियोगिरूपः प्रकारस्थधर्म इति भावः। केन प्रवृत्तिनिमित्तेनायोगवाहशब्दवाच्यतैषामित्यत्र तात्पर्यम्। नन्वनुपदिष्टाश्चेति चकारश्रवणादनुच्चारितत्वमयोगवाहशब्दस्य प्रवृत्तिनिमित्तान्तरमित्याभाति तदयुक्तम्। अनुपदेशपदार्थस्यानुच्चारणस्य तत्राभावात्। प्रयोगेषूच्चारितत्वात्। न च प्रत्याहारसूत्रानुच्चारितत्वं तथा, यदयुक्ता इत्यनेनैव तदर्थलाभेन पौनरुक्त्यापत्तेरत आह। युक्ता

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्वचित्तूपदिश्यन्ते श्रूयन्ते च । तेषां कार्यार्थ उपदेशः कर्त्तव्यः । के पुनरयो-
गवाहाः विसर्जनीयजिह्वामूलीयोपध्मानीयानुस्वारयमाः । कथं पुनरयोगवा-
हाः । यदयुक्ता वहन्ति । अनुपदिष्टाश्च श्रूयन्ते । क्व पुनरेषामुपदेशः कर्त-
व्यः । अयोगवाहानामट्सु णत्वम् * । अयोगवाहानामट्सूपदेशः कर्त्तव्यः ।
किं प्रयोजनम् । णत्वम् । उरःकेण उर ≍ केण । उरःपेण । उर ≍ पेण
अड्व्यवाये इति णत्वं सिद्धं भवति । शर्षु जश्भावषत्वे * । शर्षूपदेशः
कर्त्तव्यः । किं प्रयोजनम् । जश्भावषत्वे । अयमुब्जिरुपध्मानीयोपधः प-
ठ्यते । तस्य जश्त्वे कृते उब्जिता उब्जितुमित्येतद् रूपं यथा स्यात् । य-
द्युब्जिरुपध्मानीयोपधः पठ्यते उब्जिजिषतीत्युपध्मानीयादेरेव द्विर्वच-
प्राप्नोति । दकारोपधे पुनर्नन्द्राः संयोगादय इति प्रतिषेधः सिद्धो भवति
यदि दकारोपधः पठ्यते का रूपसिद्धिः । उब्जिता उब्जितुमिति । असिद्धं
भ उब्जेः । इदमस्ति स्तोश्चुना श्चुरिति, ततो वक्ष्यामि । भ उब्जेः

---

मिति । विधानादेषां साधुत्वं स्यात् प्रत्याहारप्रतिबद्धं तु कार्यं न प्राप्नोति ।
पुनरिति । तत्स्वरूपप्रश्नः । कथमिति । प्रवृत्तिनिमित्तप्रश्नः । अयुक्ता इत्यस्यैव
तुकथनमनुपदिष्टाश्चेति । अयुक्ताः प्रत्याहारलक्षणेन । पाठाभावादसंबद्धा इत्यर्थः
उपदेशो द्विविधः । पाठो ग्रहणकशास्त्रेण प्रत्यायनं च । स द्विविधोऽप्येषां नास्ती-
त्यर्थः । चशब्दो हेतौ । यतो ऽनुपदिष्टास्ततो ऽयुक्ता इत्यर्थः । क्व चित्तु चशब्दो
न पठ्यते । शर्ष्विति । शर्षु पाठे झस्त्वामिति झलां जश् झशीति जश्त्वं सिध्यति
उपध्मानीयादेरिति । यदि द्विर्वचेन पूर्वत्र कर्त्तव्ये जश्त्वमसिद्धमथापि पूर्वत्रासिद्धी-

---

इत्यस्यैव हेतुकथनमिति । प्रत्याहारबोधकलक्षणेनायुक्ता इत्यन्वयः । तद् व्याचष्टे
पाठाभावादिति । ग्रहणकशास्त्रेण प्रदेशे प्रवर्त्तमानेन यो वर्णस्तेषां ग्रहणकसूत्र-
पाठाभावादित्यप्यर्थः । एषां नास्तीति । अतो ऽयुक्ता इत्यर्थः । एवञ्चाक्षरसमाम्ना-
येऽयुक्ताः सन्तो वहन्ति प्रयोगं निर्वाहयन्तीत्ययोगवाहपदव्युत्पत्तिर्दर्शिता । नपुं-
सकइति । तत्र यत इत्यध्याहार्यमिति भावः । भाष्ये ( उरःकेणेति ) उरः कायती-
त्युत्पत्तेः पूर्वं समासेपि सोपदादाविति न सत्वम् । पाशकल्पककाम्येष्वेव तत्प्र-
वृत्तेः । ननु शराञ् जशोभवन्तीति लक्षणाभावाच् शर्षु पाठस्य न जश्त्वाभावः प्रयोज-
नमत आह । शर्षुपाठेइति । यदीति । पूर्वत्र द्विर्वचने इत्यन्वयः । ननु पूर्वं द्वित्वे
कृत्वात्पूर्वमेव हलादिः शेषे कथमुपध्मानीयस्याभ्यासे जश्त्वं झश्परत्वाभावात्
अभ्यासे चर्चैयनेन स्थान्तरतम्यात्प्रवृत्तिवारश्चर एवेति उपध्मानीय एव स्यादि-
ति चेच्चिन्त्यमेवैतत् । उपध्मानीयश्रवणापादने ऽपि भाष्यमासङ्गस्यात् । अन्ये तु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उब्जेश्चुना सन्निपाते भो भवतीति । तत्तर्हि वक्तव्यम् । न वक्तव्यम् ।
निपातनादेव सिद्धम् । किन्निपातनम् । भुजन्युब्जौ पाण्युपतापयोरिति ।
इहापि तर्हि प्राप्नोति । अभ्युद्गः समुद्ग इति । अकुत्वविषये निपातनम् ।
अथवा नैतदुब्जे रूपं गमेरेतद् ड्युपसर्गाड्डो विधीयते । अभ्युद्गतो ऽभ्युद्गः ।
समुद्गतः समुद्ग इति । षत्वं च प्रयोजनम् । सर्पिःषु धनुःषु । शर्व्यवायइति षत्वं
सिद्धं भवति । नुम्विसर्जनीयशर्व्यवायेपीति विसर्जनीयग्रहणं न कर्त्तव्यं
भवति । नुमश्चापि तर्हि ग्रहणं शक्यमकर्त्तुम् । कथं सर्पींषि धनूंषि । अनु-
स्वारे कृते शर्व्यवायइत्येव सिद्धम् । अवश्यं नुमो ग्रहणं कर्त्तव्यम् । अनुस्वा-
रविशेषणं नुम्ग्रहणं नुमो यो ऽनुस्वारस्तत्र यथा स्यादिह मा भूत् पुंस्विति ।
अथवा अविशेषेणोपदेशः कर्त्तव्यः । किं प्रयोजनम् । अविशेषेण संयो-

---

यमाद्द्विर्वचनइति सिद्धं सर्वथोब्जिजिषतीति प्राप्नोति । निपातनादिति । द्विर्वचनं
कथम् । निपातनाद्वाक्यशेषो ऽनुमीयते । असिद्धप्रकरणे स्तोश्चुरित्यत्रोब्जेर्भ इति ।
तत्र नन्द्रा इति दकारस्य द्विर्वचननिषेधः कर्तव्यो न तु द्विर्वचनमिति पूर्वत्रासिद्धी-
यमद्विर्वचनइत्यस्याप्रवृत्त्या भत्वस्यासिद्धत्वादिष्टद्विर्वचनसिद्धिः । अथापि न वाक्य-
शेषानुमानं निपातनमेव प्रतिपादकं तथापि दकारोपदेशसामर्थ्याद् द्विर्वचने कृते
दकारस्य बत्वं प्रवर्तते । अकुत्वविषयइति । विशिष्टविषयमनुमानमित्यर्थः । अव-
श्यमिति । अनुस्वारस्य शर्त्वात्तद्व्यवाये षत्वे सिद्धे नुम्ग्रहणं नियमार्थं नुमो यो-
नुस्वारस्तत्रैव यथा स्यादन्यत्र मा भूत् पुंस्विति । अविशेषेणेति । प्रयोजनविशेषम-

---

त्वे कृतेपि हिल्वाश्रयस्य कार्ये कर्त्तव्ये ऽसिद्धत्वं नेत्यपि पूर्वत्रासिद्धीयमित्यस्यार्थं
इति परत्वाज्जश्त्वे कृत एव हलादिः शेष इत्याशयान्न दोषः । द्विर्वचनं कथमि-
ति । बकाररहितस्येति शेषः । ननु निपातनाल्लक्षणमात्रं स्यान्न तु प्रदेशविशेषा-
वच्छिन्नमत आह । अथापीति । न चाभ्युद्ग इत्यादौ दकारोच्चारणं सार्थकं, नैत-
दुब्जे रूपमिति भाष्योक्त्या दोषाभावात् । उपतापातिरिक्तविषये ऽस्माद् घञ् ना-
नभिधानादिति तदाशयः । अकुत्वविषये निपातनमिति पक्षान्तरे त्वाद्यमेव स-
माधानम् । अनुस्वारस्य शर्त्वादिति । यद्यपि इण्कवर्गाभ्यामुत्तरो नुमा व्यवहितः
सकारः सुहिन् सु इत्यादौ संभवति तथापि तदनभिधानमिति भावः । पुंस्वित्यत्र
संपुङ्कानामित्येतत्प्रवृत्तिपरविवरणग्रन्थस्तु चिन्त्य एव । तस्य समः सुटि, पुमः
खय्यम्परे, कानाम्रेडिते इति सूत्रत्रयमात्रविषयत्वात् । ननु सूत्रविशेषानाश्रयणे
तत्प्रत्याहारासंनिवेशात्कथं तन्निबन्धनकार्यप्रवृत्तिरत आह । प्रयोजनविशेषमि-
ति । (अविशेषेणेति) भाष्यस्य प्रयोजनविशेषनिर्देशं विनेत्यर्थं इति भावः । यत्र

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गोपधासंज्ञाऽलोन्त्यद्विर्वचनस्थानिवद्भावप्रतिषेधाः * । अविशेषेण संयोगसंज्ञा प्रयोजनम् । उब्जकः । हलो ऽनन्तराः संयोग इति संयोगसंज्ञा संयोगे गुर्विति गुरुसंज्ञा गुरोरिति प्लुतो भवति । उपधासंज्ञा च प्रयोजनम् । दुष्कृतम् । निष्कृतम् । दुष्पीतम् । निष्पीतम् । इदुदुपधस्य चाप्रत्ययस्येति षत्वं सिद्धं भवति । नैतदस्ति प्रयोजनम् । न इदुदुपधग्रहणेन विसर्जनीयो विशेष्यते । किं तर्हि । सकारो विशेष्यते । इदुदुपधस्य सकारस्य यो विसर्जनीय इति । अथ वोपधाग्रहणं न करिष्यते । इदुद्भ्यां तु परं विसर्जनीयं विशेषयिष्यामः । इदुद्भ्यामुत्तरस्य विसर्जनीयस्येति । अलोन्त्यविधिश्च प्रयोजनम् । वृक्षस्तरति प्लक्षस्तरति अलोन्त्यस्य विधयो भवन्तीत्यलोन्त्यस्य सत्वं सिद्धं भवति । एतदपि नास्ति प्रयोजनम् । निर्दिश्यमानस्यादेशा भवन्तीति विसर्जनीयस्यैव भविष्यति । द्विर्वचनं प्रयोजनम् । उरःकः । उरःपः । अनचि च । अच उत्तरस्य यरो द्वे भवत इति द्विर्वचनं सिद्धं भवति । स्थानिवद्भावप्रतिषेधश्च प्रयोजनम् । यथेह भवति उरःकेण उरःपेणेत्यड्व्यवायइति णत्वम् । एवमिहापि स्थानिवद्भावात्प्राप्नोति । व्यूढोरस्केन महोरस्केनेति । तत्रानल्विधाविति प्रतिषेधः सिद्धो भवति । किं पुनरिमे वर्णा अर्थवन्त आहोस्विदनर्थकाः । अर्थवन्तो वर्णा धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनात् * । अर्थवन्तो वर्णाः । कुतः ।

---

नपेक्ष्य सकलप्रयोजनोद्देशेन यत्र यत्र प्रदेशे प्रयोजनसिद्धिस्तत्र तत्रोपदेशः कृत इत्यर्थः । उब्जक इति । उपध्मानीयस्य जश्त्वे संयोगसंज्ञायां तस्यासिद्धत्वात्संयोगसंज्ञाभावाद् गुरुत्वाभावात् प्लुतो न स्यात् । महोरस्केनेति । पूर्वत्रासिद्धे न स्थानि

---

यत्रेत्यादि । यद्यत्प्रयोजनसिद्धिरुद्देश्या तत्तद्विषयसकलप्रयोजनोद्देशेनेत्यर्थः ॥ कृतेऽकृते संयोगसञ्ज्ञायामिति । कार्यकालपक्षे इदम् । भाष्ये (इदुदुपधस्येति) विसर्गस्यालन्त्वे ह्युपधात्वमिति भावः । इदुदुपधस्य सकारस्येति । विसर्ग स्थानोपलक्षणमेतत् । अत एव निरोपि निष्कृतमिति सिध्यति । अत एव वक्ष्यमाणवचनान्तरेणाविरोधः । निष्कृतमित्यादौ सुबुत्पत्तेः पूर्वं समासेपि इणः ष इति षत्वं पाशकल्पककाम्येष्वेव तत्प्रवृत्तेः । द्विर्वचनं प्रयोजनमिति । विसर्गजिह्वामूलीयादेर्हि रुच्चारणे विशेषस्याग्रहात् । उच्चारणस्य कर्त्तुमशक्यत्वाच्च । शास्त्रप्राप्त्यर्थं च चैतत्प्रयोजनकथनमिति सन्तोष्टव्यम् । ननु सोपदादाविति सत्वस्य स्थानिवत्त्वे पूर्वत्रासिद्धीये इति निषेधान्नेत्यत आह । पूर्वत्रेति । इमे इत्यनेन न ह्यवर्णवत्त्वा एव गृह्यन्ते किं तु वर्णमात्रमित्याह । इदानीमिति । अर्थवन्त इति भाष्ये । वर्णा इति प्रश्नः । प्रकृतावच्छेदकमेव हेतुः । धातुप्रातिपदिकेत्यादिसु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनात् । धावत एकवर्णा अर्थवन्तो दृश्यन्ते । एति । अध्येति । अधीतइति"। प्रातिपदिकान्येकवर्णान्यर्थवन्ति । आभ्याम् । एभिः । एषु । प्रत्यया एकवर्णा अर्थवन्तः । औपगवः । कापटवः । निपाता एकवर्णा अर्थवन्तः । अ अपेहि । इ इन्द्रं पश्य । उ उत्तिष्ठ । अ अपक्राम । धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनान्मन्यामहे अर्थवन्तो वर्णा इति । वर्णव्यत्यये चार्थान्तरगमनात् * ॥ वर्णव्यत्यये चार्थान्तरगमनान्मन्यामहे अर्थवन्तो वर्णा इति । कूपः सूपो यूप इति । कूप इति सककारेण कश्चिदर्थो गम्यते । सूप इति ककारापाये सकारोपजने चार्थान्तरं गम्यते । यूप इति ककारसकारापाये यकारोपजने ऽर्थान्तरं गम्यते । तेन मन्यामहे यः कूपे कूपार्थः स ककारस्य यः सूपे सूपार्थः स सकारस्य यो यूपे यूपार्थः स यकारस्येति । वर्णानुपलब्धौ चानर्थगतेः * ॥ वर्णानुपलब्धौ चानर्थगतेर्मन्यामहे ऽर्थवन्तो वर्णा इति । वृक्ष ऋक्षः काण्डीर आण्डीरः । वृक्ष इति सवकारेण कश्चिदर्थो गम्यते । ऋक्ष इति वकारापाये सोर्थो न गम्यते । काण्डीर इति सककारेण कश्चिदर्थो गम्यते आण्डीर इति ककारापाये सोर्थो न

---

वदिति निषेधः अचः परस्मिन्पूर्वविधावित्यस्य न तु स्थानिवदादेश इत्यस्य । इदानींमन्यदपि वर्णगतं वस्तु विचार्यते । किं पुनरिति । पक्षद्वयेपि प्रतिवर्णं विभक्त्यनुत्पत्तिज्ञानं विचारस्य प्रयोजनम् । वर्णव्यत्ययइति । एकवर्णस्याभ्युपगमे ऽन्यापगमो व्यत्ययः । सककारस्येति । तस्यैवान्वयव्यतिरेकावनुविधत्ते ऽर्थावसायइत्यर्थः । वर्णानुपलब्धौ चेति । अर्थान्तरावगमात्प्रकृतोर्थो न गम्यते इति विवक्षितम् । इतरस्त्वर्थावगत्यभावमात्रमनेनोक्तमिति मत्वा पृच्छति । किं तर्हीति । न साधीय

---

न्तः । अनुत्पत्तिज्ञानम् । अनुत्पत्त्युपायज्ञानम् । भाष्ये [ धातव इत्यादि ] । प्रक्रियाश्रयप्रकृतिप्रत्ययानां वाचकत्वमित्थेवंरूपं वर्णस्फोटाश्रयेण । अयञ्च शास्त्रव्यवहारमात्रोपयोगी । एतद्वासनावशादेव लोकव्यवहारेपि शास्त्रज्ञास्तथा व्यवहरन्ति धर्मे चैवंविधज्ञानस्योपयोग इति बोध्यम् । हेत्वन्तरमाह । वर्णव्यत्ययेचेति । ननु कूपादौ न सिंहादाविव वर्णव्यत्ययो ऽत आह । एकस्येति । तस्यैवान्वयेति । उपशब्दस्य तु तदीयशक्त्युद्बोधकत्वरूपं द्योतकत्वं प्रादिवत् । अत एव तेषामिवैषामपि प्रातिपदिकसञ्ज्ञापादनं करिष्यते । तृतीयहेतुमाह । वर्णानुपलब्धौ चेति । अनर्थगतेरित्यस्य तद्वर्णसत्तायां योर्थस्तदर्थानवगतेरित्यर्थ इत्याह । अर्थान्तरेति । प्रश्नमुपपादयति । भाष्ये [न साधीयइति] । नञि काकुः । परमतापेक्षयेति ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गम्यते । किं तर्ह्युच्यते ऽनर्थगतेरिति । न साधीयो ह्यत्रार्थस्य गति र्भवति । एवं तर्हीदं पठितव्यं स्याद् वर्णानुपलब्धौ चातदर्थगतेरिति किमिदमतदर्थगतेरिति । तस्यार्थस्तदर्थः तदर्थस्य गतिस्तदर्थगतिः न तदर्थ गतिरतदर्थगतिरतदर्थगतेरिति । अथवा सोर्थस्तदर्थस्तदर्थस्य गतिस्तद र्थगतिर्न तदर्थगतिरतदर्थगतिरतदर्थगतेति । स तर्हि तथा निर्देशः कर्तव्यः। न कर्तव्यः । उत्तरपदलोपोत्र द्रष्टव्यः । तद्यथा । उष्ट्रमुखमिव मुखमस्य उष्ट्र मुखः । खरमुखः । एवमतदर्थगतेरनर्थगतेरिति । संघातार्थवत्त्वाच्च * ॥ सं घातार्थवत्त्वाच्च मन्यामहे ऽर्थवन्तो वर्णा इति । येषां संघाता अर्थवन्तो ऽ वयवा अपि तेषामर्थवन्तः । येषां ह्यवयवा अर्थवन्तः समुदाया अपि तेषा मर्थवन्तः । तद्यथा । एकश्चक्षुष्मान्दर्शने समर्थः तत्समुदायश्च शतमपि स मर्थम् । एकश्च तिलस्तैलदाने समर्थः तत्समुदायश्च खार्यपि तैलदाने स मर्था । येषां पुनरवयवा अनर्थकाः समुदाया अपि तेषामनर्थकाः । तद्यथा एकोन्धो दर्शने ऽसमर्थस्तत्समुदायश्च शतमप्यसमर्थम् । एका च सिक

---

इति । परमतापेक्षया प्रकर्ष आरोप्यते । यथा न किंचिदयं तत्र करोतीत्यु कश्चिदाह सुतरामयं करोतीति । एवं तर्हीति । प्रकृतोर्थो न गम्यते अर्थान्तरं गम्यते इत्यर्थः । तस्यार्थ इति । वर्णस्य परं प्रति वर्णानामर्थवत्त्वमासिद्धमिति तस्येति वर्णः परामृश्यते इत्याह । सोर्थ इति । प्रकृतोर्थ इत्यर्थः । उष्ट्रमुख इति गतार्थत्वादप्रयोग एव द्वितीयमुखशब्दस्य लोपो विधीयते । अत्र हि उष्ट्रो मुख स्येत्येव विग्रहः । न च प्राणी प्राण्यन्तरस्य मुखं भवतीति विशिष्टावयववृत्तिः शब्दः सादृश्यान्मुखं विशिनष्टि । एवमिहाप्यनर्थगतेरित्यत्रार्थशब्देन प्रकान्त

---

परेणानर्थगतेरित्युक्तत्वादिहार्थगतिरस्तीत्यभ्युपगमस्य परमते कटाक्षेण अन्यस यार्थगत्यपेक्षयात्रातिशयेनार्थगतिरस्तीति विवक्षेति भावः । तच्छब्दार्थमा वर्णस्येति । परे तु तच्छब्देन तद्वर्णघटितपरामर्शे न कश्चिद्दोषः । अत एव पूर्व ष्ये सककारेण कश्चिदर्थो गम्यतइत्युक्तमित्याहुः । लाघवेन तु कर्मधारयमा भाष्ये ( सोर्थइति ) । प्रकृतोर्थः । तस्मिन्वर्णे सति योर्थः प्रतीयते स इत्यर्थः । दृष्टान्ते सप्तम्युपमानपूर्वेतिवचनेनोत्तरपदलोपेपि प्रकृते तच्छब्दलोपः केन । च तच्छब्द उत्तरपदमपि न । तच्छब्देन नञः समासाभावादत आह । गतार्थ दिति । तथा च तद्वदत्रापि लक्षणेति भावः । चतुर्थहेतुमाह । भाष्ये (संघाता वत्त्वाच्चेति । एका सिकतेति भाष्यप्रयोगादेव सिकताशब्दस्यैकवचनान्तत्वमपि सदन्तर्गतत्वादिति । इदश्चिन्त्यम । इत्थंभूतलक्षणइति सूत्रभाष्यविरोधा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तैलदाने ऽसमर्था तत्समुदायश्च खारीशतमप्यसमर्थम् । यदि तर्हीमे वर्णा अर्थवन्तः अर्थवत्कृतानि प्राप्नुवन्ति । कानि । अर्थवत्प्रातिपदिकमिति प्रातिपदिकसंज्ञा प्रातिपदिकादिति स्वाद्युत्पत्तिः । सुबन्तं पदमिति पदसं-

---

उच्यते । न अर्थमात्रमित्यर्थः । न लोपादीनीति । श्रवणं तु विभक्तेर्न भवति । यतो यदैवावयवानां प्रातिपदिकसंज्ञा प्रवर्त्तते तदैव समुदायस्यापि तत्र तदन्तर्गतत्वाद्विभक्ते-र्लुका भवितव्यं समासग्रहणेन च तुल्यजातीयस्य सुबन्तावयवसमुदायस्य प्रातिपदिकसंज्ञा निवार्यते,न त्वर्थवत्समुदायमात्रस्य येनैव चार्थेन समुदायस्यार्थवत्त्वं तेनैव तदवयवानाम-पीति विभक्त्युत्पत्तिश्चोद्यते। अत्र परिहारमाह। संघातस्येति । वृक्ष इत्यत्रैकत्वं विभक्त्या द्योत्यते तच्चैकमित्येकैव विभक्तिरुत्पद्यते यथा बहवो द्रष्टारो दृश्यमर्थमेकेनैव प्रदीपेन पश्यन्ति । सा चोत्पद्यमाना समुदायादेव तन्त्रेण सर्वानुग्राहिण्युत्पद्यते। समुदायद्वि-र्वचनवत् । पदसंज्ञा तु समुदायस्यैव भवति न तुप्रत्येकमसुबन्तत्वाद्यस्मात्प्रत्ययविधिरि-

---

तत्र हि संज्ञाप्रवृत्त्युत्तरकालजातविभक्तेस्तन्मध्यपतितत्वेपि तदवयवत्वं नेत्युक्तं तस्मादन्तरङ्गत्वादवयवप्रातिपदिकत्वे तन्निमित्तसुपि तदनन्तरं कृदन्तत्वनिमित्त-कप्रातिपदिकत्वे सुब्लोप इति वक्तुं युक्तं ध्वनतीत्यादौ तु न तदापत्तिः। धातुप्रत्यया-न्तपदयोस्तदवयवपरत्वेन तत्र तदप्राप्तेः । धात्वादेस्तदवयवत्वन्तु व्यपदेशिवद्भावेन बोध्यम् । वस्तुत इत्थंभूतेति सूत्रस्थकैयटोक्तिरयुक्तेति तत्रैव निरूपयिष्याम इति न दोषः । धकारे जश्त्वमादिपदार्थः। सुबन्तावयवसमुदायस्येति । सुबन्तावयवेति बहुव्रीहिस्ततः कर्मधारयः । इदमुपलक्षणम् । भेदे सति यदर्थयोः संसर्गस्तदीहार-कार्थवत्समुदायस्य तेन तिङन्तसमुदायस्य व्यावृत्तिः । प्रकृते न भेद इत्याह । ये नैव चेति । तच्चैकमिति । सङ्घातस्यैकत्वमिति भाष्यस्य सङ्घातस्याप्येकत्व-मर्थः । एवञ्च विभक्तिः समुदायादेवेति भावः । ननु समुदायादुत्पद्यमाना विभक्तिः सर्ववर्णसंबन्धिनी चेत् प्रतिवर्णं पदत्वं प्राप्नोतीत्यत आह । पदसञ्ज्ञात्विति । यतस्त्वार्थबोधनाय विभक्त्युत्पत्तिस्तस्य सञ्ज्ञा प्रवर्त्तते न त्वन्येषामिति भावः । के-चित्तु विभक्तिः प्रकृत्यर्थगतप्रकृतिबोध्यसङ्ख्याद्योतिका । सङ्ख्या च समुदाय-स्यैवार्थो न प्रत्येकवर्णानामिति न तेभ्यः स्वाद्युत्पत्तिः । एकत्वं सङ्घातस्यार्थ इति भाष्यस्वरसात् प्रकृत्यंशे वर्णव्यत्ययापाययोः सङ्ख्यान्तरानुपजननात्सा समुदायस्यै-वार्थ इति तद्भावः । न चाव्ययेभ्य इवैकवचनं दुर्वारम् । सङ्ख्यारहितार्थप्रतिपा-दकेषु तथा स्वोक्तेरपि वस्तुतः सङ्ख्यावत्यर्थे सङ्ख्यानभिधायकस्वाद्युत्पत्तौ माना-भावात् । एवञ्चैषां प्रकृतित्वमेव नेति न केवला प्रकृतिरित्यस्यापि न विषयः । एतेन प्रत्येकं पदसञ्ज्ञानुग्रहाय द्विर्वचनवैषम्यात् स्वादेव प्रत्येकं सुबुत्पत्तिरित्य-पास्तमित्याहुः । अनुमानेन साधितामर्थवत्तां प्रत्यक्षविरोधेन दूषयति । अनर्थका-स्त्विति । सर्ववर्णानां पदत्वे हेतोर्भागासिद्धत्वं स्यादत आह । धात्वादीति । विप-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स आह। नानन्तरे। वृषलकुलमनयोरन्तरेति। किं पुनः कारणं क्व चिदतज्जातीयकं हि लोके व्यवधायकं भवति क्व चिन्न। सर्वत्रैव ह्यतज्जातीयकं व्यवधायकं भवति। कथमनन्तराविमौ ग्रामाविति। ग्रामशब्दोयं बह्वर्थः। अस्त्येव शालासमुदाये वर्तते। तद्यथा, ग्रामो दग्ध इति। अस्ति वाटपरिक्षेपे वर्तते। तद्यथा, ग्रामं प्रविष्ट इति। अस्ति मनुष्येषु वर्तते। तद्यथा, ग्रामो गतो ग्राम आगत इति। अस्ति सारण्यके ससीमके सस्थाण्डिलके वर्तते। तद्य-

---

ग्रानन्तरव्यवहारस्तत्र संज्ञा न चैकाकिन्यनन्तरव्यवहार इति भावः। एकप्रतिषेधस्य च प्रयोजनम् इयेषेत्यादाविजादेरित्यामो निवृत्तिः। गुरुमद्वचनामियायेत्यादिनिवृत्त्यर्थं स्यात्। वृषलकुलमिति। यद्यपि ब्राह्मणकुलमपि तयोर्व्यवधायकं तथापि भिन्नजीतायमव्यवधायकमिति यदुक्तं तदनेन निवर्त्यते। ग्रामशब्दोयमिति। केचिदर्थभेदेन शब्दभेदमिच्छन्ति। प्रत्यभिज्ञानं तु सामान्यनिबन्धनम्। अन्ये तु एकशब्दत्वं तत्र चानेकशक्तियोग एकशक्तित्वं वेति दर्शनविकल्पः। तत्र यदा एकशब्दत्वपक्षस्तदा तद्यः सारण्यके इतिभाष्यं शक्तिभेदादुपचरितभेदाश्रयम्। भेदपक्षे तु ग्रामशब्दोयं बह्वर्थ इति भाष्यम् अभिन्नसामान्यनिमित्तकत्वाध्यवसायाश्रयम्। तद्यः सारण्यकइति। ततश्च ग्रामशब्दार्थे नदीनां पर्वतानां चान्तर्भावाद्व्यवधायकत्वाभावादानन्तर्यं ग्रामनद्योरुच्येत। ग्रामे नाध्येयमित्यत्र तु ग्रामशब्दो वाटपरिक्षेपे वृत्तिः।

---

ते गुरुमदिजादित्वादाम् स्यादिति वाच्यम्। लिड्धातुसंनियोगेन संपन्नस्य गुरुमदिजादित्वस्य तद्विघातकत्वाभावादिति भावः। कुलमत्र गृहम्। ब्राह्मणकुलमपीति। तत्तद्रूपेण ग्रहणे तस्यापि विजातीयत्वादिति भावः। भाष्ये (अनयोरन्तरेति)। षष्ठ्युपादानादन्यसहितयोरवधित्वसूचनात्तद्रूपेणाग्रहणबोधनाद् ब्राह्मणकुलस्याव्यवधायकत्वमेवेत्यन्ये। भिन्नजातीयेति। तयोरन्तरा नद्यश्च पर्वताश्च भवन्तीति भाष्ये चेत्यर्थः। (ग्रामशब्दो ऽयमि) त्यस्य (तद्यः सारण्यक) इत्यस्य चाविरोधायाह। केचिदिति। अन्यायश्चानेकार्थत्वमिति तदाशयः। सामान्यञ्च ग्रामशब्दत्वादि। अन्ये त्विति। व्यक्तिभेदकल्पनायां गौरवमिति तदाशयः। तच्चेति। निरूपकभेदाच्छक्तिभेद इति भावः। एकेति। समवायैकत्वनये रसोरूपवानित्यादिप्रयोगवदन्यार्थबोधकाले ऽन्यार्थबोधो वारणीयः। तदर्थसंबन्धेन शक्त्यग्रहात्। तत्तदर्थविशिष्टशक्तिभेदेन च नानार्थत्वव्यवहार इति भावः। तत्र यदेति। एकशक्तित्वपक्षे त्वर्थभेदादुपचरितभेदाश्रयणमिति बोध्यम्। ग्रामशब्दोयं बह्वर्थ इति तु मुख्यार्थमेव। अत्र सर्वार्थनिरूपितवृत्तीनां वर्तते इत्येकशब्दबोध्यत्वेनाभेदबोधनादेकशक्तित्वपक्षो भाष्यबोधितः। तत्र वर्तनक्रियाश्रितक्रियायाः कर्त्री। शालासमुदायादौ ग्रामशब्दस्य वृत्तिरस्तीत्यर्थः। वाटपरिक्षेपो ना-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

था, ग्रामो लब्ध इति । तद्यः सारण्यके ससीमके सस्थाण्डिलके वर्तते तम-
भिसमीक्ष्यैतत्प्रयुज्यते ऽनन्तराविमौ ग्रामाविति । सर्वत्रैव ह्यतज्जातीयकं
व्यवधायकं भवति । मुखनासिकावचनोनुनासिकः ॥ ८ ॥ किमिदं मुख-
नासिकावचनम् । मुखं च नासिका च मुखनासिकम् । मुखनासिकं वचन-
मस्य सोयं मुखनासिकावचनः । यद्येवं, मुखनासिकवचन इति प्राप्नोति ।
निपातनाद्दीर्घत्वं भविष्यति । अथ वा मुखनासिकमावचनमस्य सोयं मुख-
नासिकावचनः । अथ किमिदमावचनमिति । इषद्वचनमावचनमिति, किं-
चिन्मुखवचनं किं चिन्नासिकावचनम् । मुखद्वितीया वा नासिका वचनम-

---

शुचौ देशेध्ययनप्रतिपादनतात्पर्यात् ततश्च सीमन्यधीयत एव । मुखनासिकावचने-
नुनासिकः ॥८॥ प्राण्यङ्गत्वात्समाहारद्वन्द्वे ह्रस्वत्वेन भाव्यम् । अवचनमिति नञ्स-
मासाश्रयणे ऽर्थो न संगच्छते इति प्रश्नः । किंमिदामिति । निपातनादिति । प्रसङ्गेनाप्य-
लौकिकशब्दस्य साधुत्वं ज्ञाप्यते । निपातनानां च बाधकत्वपक्षे मुखनासिकवचनशब्दो
न भाव्यमबाधकत्वपक्षे तु भाव्यमेव । ईषद्वचनमिति । भागस्य मुखेनोच्चारणाद्भागस्य
नासिकया । अस्मिन्पक्षे मुखनासिकवचनमित्यपि भवति । यो हीषदुच्यते स उच्यत
एव । यथा ईषच्छुक्लोपि शुक्ल एव । मुखद्वितीयेति । मुखसहायेत्यर्थः । तत्र नासिका
मुखसाहचर्यान्मुखशब्देनोच्यते । मुखं च तन्नासिका च मुखनासिका सा वचनमस्येति
मुखोपसंहितेति । मुखस्य च नासिकायाश्च यदन्तरालं स्थानान्तरमेवानुनासिकस्य दर्श-
यति । तत्र सामीप्यान्मुखं च तन्नासिका चेत्युभाभ्यामन्तरालं व्यपदिश्यते । पदसंस्का-

---

म ग्रामासमुदायरक्षणाय सर्वतो मार्गप्रतिरोधकं यत्परितः क्षिप्यते तदुच्यते । स-
रण्यकससीमकवृत्तिस्त्वत्र न गृह्यते इत्याह । शुचाविति । सीमनीति च ॥ ८ ॥
मुखना ॥ ८ ॥ प्राण्यङ्गत्वादिति । एतेनेतरेतरयोगद्वन्द्वे रूपसिद्धिरित्यपास्तम् ।
अर्थ इति । अभिमतोर्थ इत्यर्थः । सौत्रत्वादिति कुतो नोक्तमित्यत आह । प्रसङ्गे-
ति । अबाधकत्वेति । पक्षे त्वित्यनेनाबाधकत्वस्वीकर्तृवृत्तिमतमसङ्गतमित्युक्तं
भाष्यकृदसंमतरूपापत्तेः । बाधकान्येव निपातनानीति सर्वादिसूत्रेभाष्योक्तेः । भावि-
न्यपच इति । आङ्रहितस्येति शेषः । वस्तुत आद्यपक्षैकवाक्यतया आङ्रहिते-
त्पदवचनपदाभ्यां समासस्यानभिधानमेवेत्याहुः । ननु भागस्य मुखाद्युच्चार्यत्वे
मुखनासिकं वचनमुच्चारणकरणं यस्य वर्णस्येत्यर्थको मुखनासिकवचन इति प्रयो-
गस्तत्रासङ्गतो ऽत आह । योहीति । सहायेतिअव्युत्पन्नो द्वितीयशब्दः सहायवा-
च्यर्थः । शाकपार्थिवादित्वादुत्तरपदलोपे शब्दानित्यत्वापत्तिरत आह । तत्रेति ।
नित्यवद् चिन्त्यम् । भाष्यकृता एवं रीत्या तदप्रत्याख्यानात् । मुख्यस्यचेति । उपमा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्य सोयं मुखनासिकावचनः। मुखोपसंहिता वा नासिका वचनमस्य सोयं मुखनासिकावचनः। अथ मुखग्रहणं किमर्थम्। नासिकावचनोनुना-

---

रपक्षे तु मुखनासिकापदनिरपेक्षं वचनमित्येतत्पदं लिङ्गसर्वनामनपुंसकाश्रयेण संस्क्रियते। पश्चात्स्त्रीत्वस्य पदान्तरसंबन्धेन प्रतीयमानत्वाद्बहिरङ्गत्वान्ङीप्प्रत्ययो न भवति। यदा तु स्त्रीत्वाश्रयेण वचनीतिपदं व्युत्पाद्यते तदा मुखनासिकावचनीक इत्येव भवति। अत्र चानेकदर्शनम्। अनुनासिकस्य पूर्वः परो वा भागो मुखेनोच्चार्यते भागो नासिकया। तत्र नासिकावचनभागानुरागवशाद् मुखवचनोपि भागो नासिकावचन इव लक्ष्यते। यथा संयन्तेत्यत्रानुनासिकयकारानुरागाद् अकारोनुनासिकइव प्रतिभाति। अत्र च प्रासादवासिन्यायो नास्ति भागस्यैव मुखेन नासिकया चोच्चारणान्न तु समग्रस्य। अन्येषां तु दर्शनं मुखनासिकान्तरालं स्थानान्तरमेवानुनासिकस्येति। अत्रापि नास्ति प्रासादवासिन्यायः। यदा तु सर्व एव वर्णो मुखेन नासिकया चोच्चार्यते तदा प्रासादवासिन्यायेन भाष्यकारो मुखग्रहणं प्रत्याचष्टे। यथा भ्राष्ट्रेणोखया च पक्वः सूप उभाभ्यां व्यपदिश्यते। यमानुस्वाराणामेवेति। प्रासादवासिन्यायानवतारपक्षे इति

---

स्य सामर्थ्यादिति भावः। यद्यपि वचनशब्दे कर्मणि ल्युटि मुखनासिकेनावचनो मुखनासिकया वचन, इति वा तत्पुरुषोपि वक्तुं शक्यस्तथापि कर्मणि तस्य बाहुलकलभ्यत्वात्करणे ल्युटा बहुव्रीहिरेवाश्रितो भाष्ये। तत्रान्त्ययोर्नासिकाशब्दसामानाधिकरण्यात्स्त्रीत्वविशिष्टस्यैव करणत्वेन ल्युटि ङीपि नद्यृतश्चेति कबापत्तिरत आह। पदसंस्कारेति। भागस्य मुखेनोच्चारणाननुभवादाह। तत्रेति। तस्यादित इति सूत्रस्वरसाद्वर्णानां सखण्डत्वमित्याशयः। ये तु तत्तद्देशावच्छिन्नवायुवभिघातस्य तत्तद्वर्णजनकत्वात्स्थानानां करणत्वमेव। स्थानव्यवहारस्तु वर्णजनकवायुसंयोगाधारत्वाद्वर्णाधारत्वमारोप्य। अत एवोत्तरसूत्रे भाष्ये अस्यन्त्यनेन वर्णानित्यास्यमिति करणे व्युत्पत्तिर्दर्शितेति वदन्ति। तन्मते प्रासादवासिदृष्टान्तासंगतेराह। भ्राष्ट्रेण चेति। एतेन कण्ठादिकं तु स्थानं नासिका तु करणमिति मन्दोक्तमपास्तम्। अत एवात्र सूत्रे हरिणा। स हि वर्णो न मुखेनैव नापि नासिकयैव चात्मवृत्तिं लभते किं तु वायुनानुपरतशक्तिना ऽन्यतरकरणमभिहत्यान्यतरकरणे ऽभिहन्यमाने आत्मव्यक्तिं लभते इत्युक्तम्। यमो नाम वर्गपञ्चमे परे वर्गाद्यचतुष्टयान्यतमसदृशो वर्णः। आदितश्चत्वारो वर्णा इति विवरणेपि चतुःशब्दस्य चतुःसदृशे लक्षणा बोध्या। अत एवायोगवाहत्वप्रतिपादकहयवरट्सूत्रस्थभाष्याविरोधः। न्यायावतारेति। कचटतपानामेवेत्यवकारोप्यत्रैव पक्षे नासिकाया आस्यबाह्यत्वपक्षे च बोध्यः। अप्रतिपत्तिरिति। अत्र विडूवनोर्वम इति वक्तुं शक्यम्। यरो ऽनुनासिक इत्यत्र स्वप्रतिपत्तिः। तत्र ञमि अस्वेत्यु-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सिक इतीयत्युच्यमाने यमानुस्वाराणामेव प्राप्नोति । मुखग्रहणे पुनः क्रियमाणे न दोषो भवति । अथ नासिकाग्रहणं किमर्थम् । मुखवचनोऽनुनासिक इतीयत्युच्यमाने कचटतपानामेव प्राप्नोति । नासिकाग्रहणे पुनः क्रियमाणे न दोषो भवति । मुखग्रहणं शक्यमकर्तुम् । केनेदानीमुभयवचनानां सिद्धं भविष्यति । प्रासादवासिन्यायेन । तद्यथा । केचित्प्रासादवासिनः केचिद् भूमिवासिनः । केचिदुभयवासिनः । तत्र ये प्रासादवासिनो गृह्यन्ते ते प्रासादवासिग्रहणेन । ये भूमिवासिनो गृह्यन्ते ते भूमिवासिग्रहणेन । ये तूभयवासिनो गृह्यन्ते ते प्रासादवासिग्रहणेन भूमिवासिग्रहणेन च । एवमिहापि केचिन्मुखवचनाः केचिन्नासिकावचनाः केचिदुभयवचनाः । तत्र ये मुखवचना गृह्यन्ते ते मुखग्रहणेन । ये नासिकावचना गृह्यन्ते ते नासिकाग्रहणेन । ये उभयवचना गृह्यन्ते ते मुखग्रहणेन नासिकाग्रहणेन च । भवेदुभयवचनानां सिद्धम् । यमानुस्वाराणामपि प्राप्नोति । नैष दोषो न प्रयोजनम् । इतरेतराश्रयं तु भवति । का इतरेतराश्रयता । सतोऽनुनासिकस्य संज्ञया भवितव्यम् । संज्ञया चानुनासिको भाव्यते तदितरेतराश्रयं भवति । इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते । अनुनासिकसंज्ञायामितरेतराश्रये उक्तम् * । किमुक्तम् । सिद्धं तु नित्यशब्दत्वादिति । नित्याः शब्दाः नित्येषु च शब्देषु सतोऽनुनासिकस्य संज्ञा क्रियते । न संज्ञ

---

भावः तत्र विधिप्रदेशेषु यमानुस्वारा एवादेशाःस्युः । विड्वनोरनुनासिकस्यादित्यादि त्वनुवादप्रदेशेषु यमानुस्वाराणामसंभवादप्रतिपत्तिः स्यात् । कचटतपानामिति । पक्ति चकारलोपप्रसङ्गः । ओदनपगित्यत्रानुनासिकस्य क्विझलोः क्ङितीति दीर्घप्रसङ्ग प्रासादवासिन्यायेनेति । अयं न्यायः क्रियाशब्देष्वेव न रूढिशब्देषु । नैव दोष ति । अनुवादे तावद् यमानुस्वाराणामसंभव एव विधावप्यान्तरतम्यान्मुख

---

ह्नो सकलेष्टासिद्धेः । चकारलोपेति । निष्ठावत्त्वकुत्वयोरसिद्धत्वात् पचेरनुदा पदेष्वनतीत्यनेनेति भावः १ ननु प्रासादवासिन्यायेन मुखग्रहणप्रत्याख्यानव न्नमेव कुतो न प्रत्याख्यायते इत्यत आह । अयमिति । योगेन ह्युभयग्रहणं स ढिषु नास्तीत्यर्थः । अनुनासिकशब्दस्य च रूढिशब्दत्वम् । तस्य क्रियाशब्दत्व न्तुमशक्यम् । ननु यस्यां नासिका व्याप्रियते यस्मिन्निति योगस्य भमङ्गणेषु नि यितुमशक्यत्वात् विनिगमनाविरहेण युगपदुभयोर्व्यावृत्तेः । एतेनानु पश्चा सिकांगत इत्यर्थको नासिकानुगत इति योगोपि परास्तः । यथाकथंचि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अनुनासिको भाष्यते । यदि तर्हि नित्याः शब्दाः । किमर्थं शास्त्रम् । किमर्थं शास्त्रमिति चेन्निवर्तकत्वात्सिद्धम् । निवर्तकं हि शास्त्रम् । कथम् । आङ्स्मायविशेषेणोपदिष्टोऽननुनासिकस्तस्य सर्वत्राननुनासिकबुद्धिः प्रसक्ता तत्रानेन निवृत्तिः क्रियते । छन्दस्यचि परत आङो ऽननुनासिकस्य प्रसङ्गेनुनासिकः साधुर्भवतीति । तुल्यास्यप्रयत्नं सवर्णम् ॥९॥ तुलया सम्मितं तुल्यम् । आस्यं च प्रयत्नश्च आस्यप्रयत्नम् । तुल्यास्यं च तुल्यप्रयत्नं च सवर्णसंज्ञं भवति । किं पुनरास्यम् । लौकिकमास्यम् । ओष्ठात्प्रभृति प्राक्काकलकात् । कथं पुनरास्यम् । अस्यन्त्यनेन वर्णानिति आस्यम् । अन्नमेतदास्यन्दतइति वा

---

नस्योभयवचनो भविष्यति न तु केवलो नासिकावचनः । तुल्यास्यप्रयत्नं सवर्णम् ॥९॥ चत्वारोत्र पक्षाः सम्भवन्ति । द्वन्द्वगर्भो बहुव्रीहिः । त्रिपदो बहुव्रीहिः । तुल्यास्यशब्दयोस्तत्पुरुषस्ततो बहुव्रीहिः । आस्यप्रयत्नशब्दयेस्तत्पुरुषः ततो बहुव्रीहिरिति । तत्र द्वन्द्वगर्भो बहुव्रीहिरिति पक्षे वार्तिकस्यावतार इति तमेव भाष्यकारः पूर्वं दर्शयति । तुलया संमितमिति । व्युत्पत्त्यर्थमेव तुलोपादीयते । रूढिशब्दस्त्वयं सदृशपर्यायः । यथा प्रवीणः कुशलः प्रतिलोमो नुलोम इत्यवयवार्थाभावः । एवं तुल्यशब्देपि । किं पुनरास्यमिति । किं मुखमथ तत्र भवं तात्वादिकं स्थानमिति प्रश्नः । लौकिकमिति । पशुरपत्यं देवतेत्यादिवत् प्रसिद्धमित्यर्थः । यद्यपि ताल्वादिकमपि लौकिकमास्यं तथापि तत्र योगवशादास्यशब्दो वर्तते इति झटिति न तत्प्रसिद्धमिति मुखमेव प्रसिद्धत्वाल्लौकिकमित्युक्तम् । तस्यैव च प्राथम्याद् ग्रहणं युक्तमित्यर्थः । ओष्ठादिति । काकलकं हि नाम ग्रीवायामुन्नतप्रदेशः । कथं पुनरिति । यदि निमित्तवशात्प्रवर्तते । ततस्ताल्वादिष्वपि प्रवर्तिष्यतइति प्रश्नः । अस्यन्त्यनेनेति । सत्यपि निमित्ते रूढिवशान्मुखे

---

गोपपाद्दने तु रूढिरेव फलितेति दिक् ॥८॥ तुल्यास्यप्र ॥९॥ तत्पुरुषइति । तुल्यास्यशब्दयोर्मयूरव्यंसकादित्वात्पूर्वपदार्थप्रधानस्तत्पुरुषः । आस्यप्रयत्नशब्दयोश्च साधनं कृतेत्यनेन समासः । ननु स्थानादिकं न तुलया संमीयते ऽत आह । व्युत्पत्त्यर्थमेवेति । किं मुखमिति । अतद्धितान्ततद्धितान्तास्यशब्दविषयकसन्देह इत्याशयः । तद्धितान्तमपि लौकिकमेव न वैदिकमित्यत आह । पशुरिति । झटिति । पदश्रवणमात्रेणेत्यर्थः । निमित्तवशात् । अवयवार्थवशात् । जातिस्फोटेति । वर्णानिति वर्णपदं बोधकपरम् । तत्र जातेर्बोधकत्वे तस्या नित्यत्वादभिव्यक्तिरसन, त्तदाश्रयव्यक्तीनां वाचकत्वे तूत्पत्तिरिति भावः । अत एव वर्णानिति बहुवचनं सङ्गच्छते । एकैव व्यक्तिस्तत्तद्रूपेणाभिव्यक्ता वाचिकेति पक्षे तदसंगतिः स्पष्टैव । क

२४

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आस्यम् । अथ कः प्रयत्नः । प्रयतनं प्रयत्नः । प्रपूर्वाद्यततेर्भावसाधनो न
प्रत्ययः । यदि लौकिकमास्यम् । किमास्योपादाने प्रयोजनम् । सर्वेषां
तत्तुल्यम् । वक्ष्यत्येतत् । प्रयत्नविशेषणमास्योपादानमिति । सवर्णसंज्ञा

---

एव प्रवर्तते न ताल्वादिष्वित्यर्थः । कृत्यल्युट इति करणे ण्यत् । असनमत्र
तिस्फोटपक्षेभिव्यक्तिः । व्यक्तिस्फोटपक्षे तूत्पत्तिः । अन्नमेतदिति । आङ्पूर्वात्
न्दतेरन्येष्वपि दृश्यतइति डः । एतदास्यं कर्म अन्नं कर्तृ आस्यन्दते द्रवीक
अन्नप्रक्षेपणेन मुखस्य द्रवत्वोत्पादनात् । अथ कः पुनः प्रयत्न इति । किं प्र
प्रयत्नः । अथ प्रारम्भो यत्नस्येति प्रश्नः । भावसाधन इति । भावेभिधेये नङ्प्र
क्रियते । तेन नङ्शब्दस्येह भावः साधनं भवति । किमास्योपादानइति । आस्य
सर्ववर्णानां निष्पादनादिति भावः । नासिकापि न बाह्या वर्णोत्पत्तिनिमित्तं किं
स्यान्तश्चर्म विततमस्ति पणवचर्मवत् तत्संबद्धा रेखा नासिका तस्यां वाय्वभिघाताद
त्पत्तिः। विसर्जनीयस्यैकीयमतेनोरस्यत्वात्सावर्ण्याभावेपि न दोषः । वक्ष्यतीति । क
परीक्षावसर इति भावः । सवर्णसंज्ञायामिति । द्वन्द्वे प्रयत्नस्यास्येनाविशेषणान्मुखप्रय
योस्तुल्यत्वाद्भिन्नस्थानानामपि प्रसङ्गः । भाष्ये शकारः प्रत्याहारपाठवशात्पठितः। ग
प्रत्याहारे जबगडदानां प्राप्नोतीत्यर्थः । शकारस्य तु विवृतत्वात्स्पर्शानां स्पृष्ट

---

चित्तु व्यक्तिस्फोटपक्षे ऽभिव्यक्तिः। जातिस्फोटपक्षे तूत्पत्तिरिति पाठः। अयमेव
प्रदायिकः पाठः। एकैव व्यक्तिर्वाचिका कत्वादिकं तु ध्वनिनिष्ठं ध्वनिविशेषबल
वा सा च नित्येति व्यक्तिस्फोटवादस्तदाभिव्यक्तिः स्पष्टैव। बहुवचनं त्वेकस्यै
हुरूपत्वादारोपितबहुत्वमादाय नेयम्। व्यक्तयो ऽनन्ता जन्याश्च। तत्र जाति
शक्तेति जातिस्फोटवादस्तदोत्पत्तिरित्यर्थः।अन्येष्वपीति। दृषिग्रहणाद्बाहुलका
स इति भावः। ननु साधनशब्देन कारकशक्तिरभिधीयते इति भावस्य साधन
नुपपन्नमत आह। भावइति। नङ्। यजयाचेत्यनेन। ननु तुल्यावास्यप्रयत्नमा
जनकावित्यर्थे नासिकास्थानङञादिनिवृत्त्यर्थमास्योपादानं स्यादत आह।
सिकापीति। एवञ्चास्यग्रहणे कृतेपि तद्व्यावृत्तिर्दुरुपपादेति भावः। व
अवधारणगर्भसमासे ऋखाकारादिभिर्ह्रस्वाकारादीनां सावर्ण्यानापत्तिः।
नकवायुसंयोगानामपि तुल्यत्वात्। अनवधारणगर्भसमासे त्वनुनासिक
त्तिरपि दुरुपपादैवेति भाष्याशयः। एवञ्च नासिकाया बाह्यत्वेपि न
अत एव मुखनासिकेति सूत्रे मुखञ्च नासिकाचेति, मुखद्वितीया
केति च विग्रहप्रदर्शनं भाष्ये। नह्यवयवावयविविषये एवं प्रयोगः सचेतसाम
हस्तो देवदत्त इत्यादौ विद्यमानवाची सहशब्दः। अत एव मुखवचनो ऽनुना

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भिन्नदेशेष्वतिप्रसङ्गः प्रयत्नसामान्यात् * । सवर्णसंज्ञायां भिन्नदेशेष्वतिप्रसङ्गो भवति । जवगडदशाम् । किं कारणम् । प्रयत्नसामान्यात् । एतेषां हि समानः प्रयत्नः । सिद्धं त्वास्ये तुल्यदेशप्रयत्नं सवर्णम् * । सिद्धमेतत् । कथम् । आस्ये येषां तुल्यो देशः प्रयत्नश्च ते सवर्णसंज्ञा भवन्तीति वक्तव्यम् । एवमपि किमास्योपादाने प्रयोजनं सर्वेषां हि तत्तुल्यम् । प्रयत्नविशेषणमास्योपादानम् । सन्ति ह्यास्याद्बाह्याः प्रयत्नाः । ते हापिता भवन्ति । तेषु सत्स्वसत्स्वपि सवर्णसंज्ञा सिद्धा भवति । के

---

प्रसङ्ग एव । ततश्च ऊर्ज इत्यादौ झरोझरीति लोपप्रसङ्गः । एवमपीति । आस्ये येषां तुल्यो देश इत्यास्येन देशो विशेष्यते । तत्र व्यभिचाराभावादास्येन देशस्य विशेषणमयुक्तमित्यर्थः । प्रयत्नविशेषणमिति । तस्य संभवव्यभिचारसद्भावादित्यर्थः । बा-

---

ह्रतीयत्युच्यमाने कचटतपानामेव प्रसज्येतेति भाष्ये एवशब्दः सङ्गच्छते । अन्यथा यमादीनां ङादीनाञ्च मुखवच्चनत्वात्तदसङ्गतिः स्पष्टैव । आस्यानन्तर्गतत्वे तु न दोषः । मुखमात्रवचनत्वाभावात् । प्रासादवासिन्यायप्रदर्शकभाष्येणापि ध्वनितमेतत् । कैयटोक्तास्यान्तर्गतत्वपक्षे तु सूत्रे मुखपदं मुखावयवपरं ब्राह्मणवसिष्ठन्यायेन च नासिकातिरिक्तावयवग्रहणम् । एवकारस्याप्यर्थः । दृष्टान्तोप्येकांशेन बोध्य इति । नन्वेवमपि विसर्जनीयव्यावृत्तये तत्स्यादत आह । विसर्जनीयस्येति । ततश्चान्येषां कण्ठादिस्थानमेवेति भावः । उरस्यमतेऽप्याह । सावर्ण्याभावेपीति । ननु इदानीमेव किं नोच्यतेऽत आह । नास्येति । द्वन्द्वे प्रयत्नस्यास्येनाविशेषणादित्यस्योपयोगश्चिन्त्यः । अत्रेति । एतद्वर्णसमूहसाध्यप्रत्याहारे इत्यर्थः । ऊर्ग् अन्नन्तस्माज्जात ऊर्ग् जः । आस्ये इति । देशविशेषणवैयर्थ्याभिप्रायेण प्रश्न इति भावः । न च नासिकाया आस्यानन्तर्गतत्वपक्षे तद्व्यावृत्तये देशविशेषणमावश्यकमिति वाच्यम् । अनुनासिकाकारादौ कण्ठादिषु वाय्वभिघातादभिव्यक्तेषु वर्णेषु नासिकाभिघातेनानुनासिक्यं धर्म उत्पद्यते इत्यनुभवेन हविराद्येच्सूत्रस्थादभेदकत्वाद् गुणस्येति वाच्यम् । आनुनासिक्यसङ्ग्रहार्थं तद्यथैकोऽयमात्मेत्यादिभाष्यकैयटादौ तथैव लाभेन च तेषु नासिकाया देशत्वाभावस्य क्लृप्तत्वात् । ञादिष्वपि तथैवेत्यभिमानात् । देशपदेन ताल्वादिस्थानमेवोच्यते इति जबगडादिषु न दोषः । भाष्ये ( प्रयत्नविशेषणमिति ) । देशप्रयत्नमिति द्वन्द्वस्तु सौत्रत्वात्साधुरिति भावः । स्पृष्टेत्यादि । आस्यान्तर्गततत्तत्स्थानेषु जिह्वाग्रादीनां वर्णाभिव्यक्तिजनकस्पर्शेषत्स्पर्शदूरावस्थानसमीपावस्थानरूपाभ्यन्तरकार्यकारिप्रयत्नविशेषा एतैः पदैरुच्यन्ते तेषां चास्यान्तर्गतत्वमास्यान्तर्गततत्तत्स्थानेषु वायुसंयोगजनकत्वेनेतिबोध्यम् । आस्ये इत्यस्य यत्कार्यं तज्जनक इति शेषो वा । भाष्ये (तेहापिता

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुनस्ते । विवारसंवारौ । श्वासनादौ । घोषवदघोषता । अल्पप्राणता । म
हाप्राणतेति । तत्र वर्गाणां प्रथमद्वितीया विवृतकण्ठाः श्वासानुप्रदा

---

ह्यप्रयत्नव्युदासाच्चत्वार आभ्यन्तरा गृह्यन्ते । स्पृष्टतेषत्स्पृष्टतासंवृततावि‍वृत

---

इति)। सवर्णसंज्ञा स्वनिमित्तत्वेन बाह्यप्रयत्नान् जहातीति तया ते स्वनिमित्त
त्वापिता इत्यर्थः। (विवारसंवारौ)। कण्ठबिलस्य विकाससङ्कोचौ। विवृतः कण्ठो
श्वासो ऽनुप्रदीयते यैरित्यर्थः। (एके) उक्तवाक्ययोः प्रथमोपात्ताः। (नादौ) वर्ण
त्पत्त्यनन्तरभावी अनुरणनरूपः शब्दः। (यथा तृतीया) इत्यनेन तेषामल्पप्राणत्वं
धितम्। देशविशेषणमप्यास्यग्रहणमावश्यकमिति गूढाशयेनाह। भाष्ये (आनुना
स्यमेषामधिको गुण इति)। अयं भावः। अत्र देशपदेन ताल्वादिस्थानमुच्यते।
नशब्देन च योगरूढ्या वर्णाभिव्यक्तिजनकवायुसंयोगानुयोगि ताल्वाद्युच्यते।।
यद्यपि अकारादीनां गुणमात्रजनिका नासिका स्वरूपस्य कण्ठादिभिरेवाभिव्य
सिद्धेस्तथापि ञादीनां स्वरूपस्य न केवलताल्वादिना नापि केवलनासिकया
व्यक्तिरिति विनिगमनाविरहादुभयावच्छिन्नवायुसंयोगस्यैव तज्जनकत्वात्तेषां
सिकापि स्थानम्। न चैवं त्वङ् करोषीत्यादौ चरितार्थं परसवर्णशास्त्रं संय
त्यादौ न प्रवर्त्तेत। उक्तरीत्या यादीनां नासिकास्थानत्वाभावेन स्थानत आन्त
भावादिति वाच्यम्। स्थानेन्तरतमे इति सप्तम्यन्तपाठस्य दूषितत्वेनास्या युक्तं
सावात्। अनुनासिकाकारादीनामपि सा स्थानमिति त्वयुक्तमेव। एवं हि उत्प
कसामग्रीभेदात्कङयोरिव स्वरूपभेदस्यैवापत्तौ अभेदकगुणपक्षेपि निरनुनासि
सानुनासिकग्रहणानापत्तिः। एवञ्च यावत्स्थानसाम्ये सवर्णसंज्ञेति सिद्धान्ते ना
कारूपदेशभेदात्कङादीनामप्राप्तसावर्ण्यसिद्धये आस्येन देशविशेषणमावश्य
नासिकाया आस्यान्तर्गतत्वेपि मुखनासिकेति सूत्रे नासिकातिरिक्तावयवकमुख
ग्रहणेन तत्साहचर्यादत्राप्यास्यपदेन तादृशस्यैव ग्रहणं बोध्यम्। अन्यथा त
एतत्कथनवैयर्थ्यापत्तिः। आस्यग्रहणव्यावर्त्यानां सावर्ण्यानुपयुक्तानां प्रदर्श
व ह्यत्र प्रक्रान्तम्। न चेदं प्रयत्नविशेषणमास्यग्रहणव्यावर्त्यमेवास्तु। अनुना
कयकारादीनां ञादिभिः सावर्ण्यं च व्यावर्त्यं तत्फलञ्च तञ्जुङु वे तन्नमतीत्य
अनुस्वारस्य ययीत्यनेन यकारलकारयोरनुनासिकयोरभाव इति वाच्यम्। अनु
रस्य नासिकास्थानत्वेन स्थानतोन्तरतमयोर्ञनयोरेव प्रवृत्तेः। अनुनासिकयादी
उक्तरीत्या न नासिका स्थानमित्यदोषात्। इदमेव ध्वनयितुं गुण इत्युक्तम्। गु
देन च सावर्ण्यानुपयोगिन आन्तरतम्यपरीक्षोपयोगिनो विवारादय उच्यन्ते।
तत्साहृश्यादत्रापि गुणशब्दप्रयोगः। अत एव बाह्यप्रयत्नानुपक्रम्य "सोनुना
नह्रावि"ति शिक्षायामुक्तम्। अत एवोदात्तादिभिः सहैकादशबाह्यप्रयत्ना
कैयटो वक्ष्यति। उदात्तादीनामपि वृद्धिसञ्ज्ञासूत्रशेषे गुणत्वेन व्यवहारात्।
एवए वमप्यवर्णस्य सञ्ज्ञा न प्राप्नोति बाह्यं ह्यास्यात्स्थानमवर्णस्यैवमपि आ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अघोषाश्च । एके ऽल्पप्राणा इतरे महाप्राणाः । तृतीयचतुर्थाः संवृतकण्ठा नादानुप्रदाना घोषवन्तः । एकेऽल्पप्राणाः । अपरे महाप्राणाः । यथा तृतीयास्तथा पञ्चमाः । आनुनासिक्यवर्जम् । आनुनासिक्यमेषामाधिको गुणः । एवमप्यवर्णस्य सवर्णसंज्ञा न प्राप्नोति । बाह्यं ह्यास्यात्स्थानमवर्णस्य । सर्वमुखस्थानमवर्णमेक इच्छन्ति । एवमपि व्यपदेशो न प्रकल्पते । आस्ये येषां तुल्यो देश इति । व्यपदेशिवद्भावेन व्यपदेशो भविष्यति । सिध्यति । सूत्रं तर्हि भिद्यते । यथान्यासमेवास्तु । ननु चोक्तं सवर्णसंज्ञायां भिन्नदेशेष्वतिप्रसङ्गः प्रयत्नसामान्यादिति । नैष दोषः । नहि लौकिकमास्यम् । किं तर्हि । तद्धितान्तमास्यम् । आस्ये भवमास्यम् । शरीरावयवा-

---

ख्याः । बाह्यं ह्यास्यादिति । काकलकस्याधस्तादुपजत्रुस्थानमवर्णस्यैक इच्छन्ति । सति च बाह्यदेशसंभवे तद्व्यवच्छेदायास्येन देशो विशेष्यतइति प्रश्नः । सर्वमुखेति । अवर्णनिष्पत्तौ सर्वमेव मुखं व्याप्रियतइति नास्य बाह्यस्थानता । एवमपीति । अवर्णस्यास्यमेव देशो न त्वास्ये देशः व्यपदेशिवद्भावेनेति । सर्वावस्थायुक्तमास्यमास्यशब्देनोच्यते । देशशब्देन तु विशिष्टैवावस्था वर्णोत्पादनहेतुः । तत्र बुद्धिकृतभेदाश्रयेण व्यपदेशः । नहीति । प्राथमकल्पिकमित्यर्थः । यौगिकस्य तु व्यवहितस्य ग्रहणम् । स्थानमिति । ताल्वादि । करणमिति । स्पृष्टतादि । जिह्वाया अग्रोपाग्रमध्यमूलानि वा । यद्येवं प्रयत्नग्रहणं न कर्तव्यं तस्याप्यास्ये भवत्वाद् आस्यग्रहणेन ग्रहणात् । सत्यमेतत् । प्रत्येकं तु व्यापारानिरासार्थमुभयोरुपादानम् तेन द्वयोस्तुल्यत्वे सवर्णसंज्ञा भ-

---

न प्रकल्पते आस्ये येषां तुल्यो देश, इति भाष्यं स्वरसतः सङ्गच्छते । अन्यथा प्रयत्नविशेषणमात्रस्योक्तेर्देशविशेषणत्वाभावेन तदसङ्गतिः स्पष्टैव । आस्येन देशविशेषणाभावान्न दोष इत्येव वक्तव्ये सर्वमुखेत्यादिसमाधानस्यापि निर्दलत्वापत्तिश्च । एके इत्यनेन सर्वमतन्तु कण्ठस्थानमिति ध्वनयति । व्यवहितस्येति । यद्यपि रूढिर्योगापहारिणी तथाप्यास्यपदोपादानसामर्थ्याद्व्यवहितस्यापि ग्रहणमिति भावः । ताल्वादीति । शिक्षायामन्तेन रूपेणैव वर्णस्थानत्वकथनादिति भावः । एतेन ताल्वादिषूर्ध्वाधोभागभेदादुदात्तादीनां सवर्णसञ्ज्ञा न प्राप्नोति इत्यपास्तम् । आस्यभवशब्देन तद्रूपावच्छिन्नस्यैव ग्रहणेनादोषात् । ननु प्रयत्नपदेनैव तद्ग्रहणसिद्धिरत आह । जिह्वाया अग्रेत्यादि । प्रत्येकंत्विति । प्रत्येकनिरूपितसादृश्यग्रहणनिरासार्थमित्यर्थः । यद्यपि ज्ञापकेनापि प्रत्येकव्यापारनिरासः सुकरस्तथापि यावदास्यभवैक्यविवक्षायां ह्रस्वदीर्घयोः सावर्ण्यानापत्तिः । तत्तज्जनकवायुसंयोगानामतुल्यत्वात् । अतः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यत् । किं पुनरास्ये भवम् । स्थानं करणं च । एवमपि प्रयत्नो ऽविशेषि-
तो भवति । प्रयत्नश्च विशेषितः । कथम् । नहि प्रयतनं प्रयत्नः । किं
तर्हि । प्रारम्भो यत्नस्य प्रयत्नः । यदि प्रारम्भो यत्नस्य प्रयत्नः । एव-
मप्यवर्णस्य एङोश्च सवर्णसंज्ञा प्राप्नोति । प्रश्लिष्टावर्णावेतौ । अवर्णस्य

---

वति । अविशेषित इति । आस्येनेत्यर्थः । द्वन्द्वपक्ष एवात्र स्थित इति प्रश्नः । तत-
श्च बाह्याः प्रयत्ना न त्यक्ताः स्युः । प्रारम्भो यत्नस्येति । अत्र पूर्वं स्पृष्टताद-
यश्चत्वारः पश्चान्मुर्ध्नि प्रतिहते निवृत्ते प्राणाख्ये वायौ विवारादयो बाह्या एकादश
प्रयत्ना उत्पद्यन्ते । एवमपीति । संध्यक्षरेषु प्रथमभागस्याकारेण सादृश्यात्सवर्ण-
संज्ञाप्राप्तिरिति प्रश्नः । प्रश्लिष्टावर्णाविति । नात्र भागविवेकोस्ति पांसूदकवदित्यर्थः ।

---

प्रयत्नपदमास्यपदेन स्थानमात्रग्रहणार्थं स्थानं करणञ्चेति भाष्ये करणपदे
वायुसंयोगोपि प्रयत्नग्रहणाच्च नातिप्रसंग इति तात्पर्यम् । अत एव यावत्स्था
नैक्यपरेण'नैतौ तुल्यस्थानाविति' भाष्येण न विरोध इति दिक् । भाष्ये (प्रार
म्भो यत्नस्येति ) अत्र यत्नस्येति निर्धारणे षष्ठी । जातौ चैकवचनम् । प्रारम्भ
इति कर्मणि घञ् । यत्नानां मध्ये प्रथमं वर्णोत्पत्तेः पूर्वमारभ्यमाण इत्यर्थः
अत्रापि नासिकाया अग्रहणमुपपादितरीत्यैवेति बोध्यम् । अत्रेदं बोध्यम् । प्रय
प्रयोगेच्छयोत्पन्नयत्नान्नाभिप्रदेशात्प्रेरितो वायुर्वेगान् मूर्धपर्यन्तं गत्वा ततः प्रति
निवृत्तो यत्नविशेषसहायेन तत्तत्स्थानेषु जिह्वाग्रादिस्पर्शपूर्वकं तत्तत्स्थानान्याहत्य
वर्णानभिव्यनक्ति ततो यत्नविशेषसहायेन परावृत्तिसमये गलविवरादीनां विका
सादीन् करोति । तत्र ये तत्तत्स्थानाभिघातका यत्नास्ते आस्यान्तर्गततत्तत्का
र्यकारित्वादास्ये प्रयत्ना इत्युच्यन्ते । आभ्यन्तरा इति प्रारम्भइति च गलवि
वरादिविकासादिकराश्चास्यबहिर्भूतदेशे कार्यकरत्वाद्बाह्या इति । एवं मात्रा
कालिकत्वादिकमपि वायुवत्पलक्षितमिति नाभिप्रदेशात्प्रेरकयत्न एव क
श्चिद्विलक्षणोऽल्पंवायुं प्रेरयति कश्चिदधिकमिति तस्य यत्नस्य वायुप्रेरण
रूपं कार्यमास्यबाह्यदेशमिति तस्यापि व्यावृत्तिरास्यपदेनोक्ता अद्भुत
भाष्ये । मूर्ध्नि प्रतिहते तद्वर्णोत्पत्तेः पूर्वं स्पृष्टतादयः पश्चान्निवृत्ते प्राणाख्ये
इत्यन्वयः कैयटे । अत एव " सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः । वर्णा
ञ्जनयत "इति शिक्षया न विरोध इति दिक् । भाष्ये (यदिप्रारम्भ) इत्यत्र यदी
त्यस्य यद्यपीत्यर्थः । अकारेणेति । ततश्च स्वसवर्णाकारस्य तत्र सत्वेन तद्द्वारा
तुल्यस्थानत्वेनावर्णैङोः सावर्ण्यं गम्यमित्यत्र यस्येति लोपप्रसङ्ग इत्यभिमानः
पांसूदकेति । प्रश्लिष्टावित्यस्य प्रकर्षेण श्लिष्टौ मिलितावित्यर्थः । ततश्च तदन्त

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तर्ह्यैचोश्च सवर्णसंज्ञा प्राप्नोति । विवृततरावर्णावेतौ । एतयोरेव तर्हि मिथः सवर्णसंज्ञा प्राप्नोति । नैतौ तुल्यस्थानौ । उदात्तादीनां तर्हि सवर्णसंज्ञा न प्राप्नोति । अभेदका उदात्तादयः । अथवा किं न एतेन प्रारम्भो यत्नस्य प्रयत्न इति । प्रयतनमेव प्रयत्नः । तदेव च तद्धितान्तमास्यम् । यत्समानं तदाश्रयिष्यामः । किं सति भेदे । सतीत्याह । सत्येव हि भेदे सवर्ण-

---

अवर्णस्येति । विभागोत्र सुलक्ष्य इति प्रश्नः । ततश्च नाव्यमित्यत्र यस्येतिलोपप्रसङ्गः । एतयोरिति । ततश्च एत ऐ इत्यौकारोपि स्यात् । भाव्यमानेनापि क्वचित्सवर्णग्रहणदर्शनात् । अभेदका इति । लिङ्गेनैतत्प्रतिपादितं न शास्त्रे एते स्वशब्दोपादानमन्तरेण कार्येषु भिद्यन्तइति । तेन प्रारम्भभेदेप्युदात्तादीनां मिथःसवर्णसंज्ञा भविष्यति । यत्समानमिति । स्पृष्टत्वस्य समानत्वाद्वर्ग्याणां बाह्यप्रयत्नभेदेपि सवर्णसंज्ञा भविष्यति । किं सतीति । स्पृष्टताद्यभेदाद्विवारादिभेदेपि यथा भवति तथा स्पृष्टतादिभेदेपि विवाराद्यभेदात्प्राप्नोतीति प्रश्नः । सत्येवेति । झरोझरीत्येवान्यथा ब्रूयात् । यथासं-

---

भवेन केवलताल्वादिस्थानकत्वेन च न तयोः सावर्ण्यप्राप्तिरिति भावः । विभागोत्रेति । एवञ्च पूर्ववत्तयोः सावर्ण्यं प्राप्नोत्येवेत्यर्थः । भाष्ये (एतदुत्तरं विवृततरौ वर्णाविति) । एवञ्च तद्द्वारा एतयोरपि विवृततरत्वेन प्रयत्नभेदाभावेन न सावर्ण्यम् । अकारस्य ततोऽपि विवृततरत्वात्तेनाप्यनयोर्न सावर्ण्यं फलाभावश्चेति भावः । एतयोरेवेति । यत्किंचित्स्थानसाम्ये सवर्णसञ्ज्ञेत्यभिमानः । क्वचित् । अदसोऽसेर्दादु दो म इत्यादौ । भाष्ये (नैतौ तुल्यस्थानाविति) । तोर्लीति परसवर्णरहिततद्दानासमितिनिर्देशाद् यावत्स्थानसाम्यमत्र विवक्षितमिति भावः । यत्त्वेषां सस्तुदितं स्थानमिति । तन्न । "दन्त्योष्ठ्यो वः स्मृतो बुधैः ॥ ए ऐ तु कण्ठ्यतालव्या वि"ति शिक्षायां प्रत्येकं तत्र भव इत्यधिकारस्थयदनापत्तेः । दन्तोष्ठ्य इति पाठस्त्वसङ्गतः । शरीरावयवसमुदायस्य शरीरावयवत्वाभावात् । स्वाङ्गसमुदायस्य स्वाङ्गत्वाभाववत् । स्वजनकवायुसंयोगावच्छेदके कण्ठादौ स्वाधारत्वमारोप्य कण्ठे भव इत्याद्युपपत्तिः । शरीरेमे वेदनेत्यप्येवमेवेति दिक् । (उदात्तादीनां तर्हीति) । यावत्स्थानैक्यवद् यावत्प्रयत्नैक्यविवक्षणादिति भावः । स्वशब्दा उदात्तादिशब्दाः । एवञ्चान्न प्रयत्नशब्देनोदात्तादीनां न ग्रहणमिति भावः । भाष्ये (उदात्तादीनां सवर्णसञ्ज्ञा न प्राप्नोतौ) त्यस्य (आस्येन प्रयत्नोऽविशेषित) इत्यस्य च समाध्यन्तरम् । एकदेशी । (अथवा किं न एतेनेति) । नोऽस्माकमेतेन प्रारम्भो यत्नस्येत्यर्थकप्रयत्नशब्दाश्रयणेन किमित्यर्थः । क्लिष्टत्वादिति भावः । बाह्यप्रयत्नभेदेपीति । एवमुदात्तादिभेदेपि भविष्यतीत्यपि बोध्यम् । यद्यपि सवर्णसञ्ज्ञाया न प्रयत्नभेदगर्भत्वं तथापि ज्ञापकादेतदर्थसिद्धिरित्याह । झरोझरीति । भाष्ये ( सत्येव हि भेदेइति ) यत्किं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मानं तदाश्रयिष्यामः । किं सति भेदे । सतीत्याह । सत्येव हि भेदे सवर्ण-
संज्ञया भवितव्यम् । कुत एतत् । भेदाधिष्ठाना हि सवर्णसंज्ञा । यदि हि
यत्र सर्वं समानं तत्र स्यात्सवर्णसंज्ञावचनमनर्थकं स्यात् । यदि तर्हि सति
भेदे किं चित्समानमिति कृत्वा सवर्णसंज्ञा भविष्यति । शकारच्छकारयोः
षकारठकारयोः सकारथकारयोः सवर्णसंज्ञा प्राप्नोति । एतेषां हि सर्व-
मन्यत्समानं करणवर्जम् । एवं तर्हि प्रयतनमेव प्रयत्नः । तदेव हि तद्धिता-
न्तमास्यं न त्वयं द्वन्द्वः । आस्यं च प्रयत्नश्च आस्यप्रयत्नमिति । किं तर्हि
त्रिपदोयं बहुव्रीहिः । तुल्य आस्ये प्रयत्न एषामिति । अथवा पूर्वस्तत्पुरुष-
स्ततो बहुव्रीहिः । तुल्य आस्ये तुल्यास्यः । तुल्यास्यः प्रयत्न एषामिति

---

ष्ट्यनिरासार्थं हि तत्र सवर्णग्रहणं कृतम् । शिण्ढि इत्यत्र डकारस्य ढकारे परतो लो-
पार्थम् । यदि च यत्र सर्वं समानं तत्रैव सवर्णसंज्ञा स्याद् डकारढकारयोर्भेदात्सवर्ण-
नास्तीति सवर्णग्रहणमनर्थकं स्यात् । सर्वमिति । वर्गाणां प्रथमद्वितीया इत्यस्यां शिक्षा-
पठितमघोषत्वादि । करणंतुभिन्नम् । वर्ग्याणां स्पृष्टत्वादूष्मणां च विवृतत्वात् । सति
सवर्णत्वे निश्छ्छद्म निष्ठुरं निस्स्थानं मधुलिट्स्थानमित्यत्र झरोझरीति लोपः प्राप्नो-
तीति । छद्मना निष्क्रान्तमिति प्रादिसमासः । अनचि चेति शकारस्य द्वित्व-
नम् । तुल्य आस्यइति । तद्धितान्त आस्यशब्दो न स्वाङ्गवाच्येवेत्यमूर्द्धमस्तक

---

चित्प्रयत्नभेदे सत्येवेत्यर्थः । (कुत एतदिति) । सूत्राच्चरैस्तदलाभ इति प्रश्नः । सम
धत्ते । भेदाधिष्ठानाहीति । यत्किंचित्प्रयत्नभेदेत्यर्थः । तत्र ज्ञापकमाह । यदि हि
ति । सवर्णसञ्ज्ञावचनमित्यस्य सवर्णपदोच्चारणमित्यर्थः । सञ्ज्ञा त्वणुदित्सवर्ण
त्याद्यर्थमावश्यकेति बोध्यम् । भेदादिति । बाह्यप्रयत्नभेदादित्यर्थः । नन्वेवं
त्किंचित्स्थानैक्यादेकारौकारयोः सावर्ण्यापत्तिरिति चेन्न । ज्ञापकात्प्रयत्न
यावत्प्रयत्नसमानत्वत्यागेपि स्थानांशे तत्त्यागे मानाभाव इत्याशयात् । यत्तु
षामित्यादिनिर्देशैः स्थानांशे यावत्स्थानतुल्यत्वविवक्षणाच्च । यत्तु तुल्यत्वस्य भेदघ
तत्वात्सवर्णसंज्ञा भेदाधिष्ठानेत्यर्थ इति । तन्न । तेन सावर्ण्यनियामकप्रयत्न
स्थानयोश्च परस्परभेदलाभेपि वर्णानां यत्किंचित्प्रयत्नभेदस्य ततो ऽलाभा
स्थानानामन्ततस्तत्कालरूपोपाधिभेदेन भेदो बोध्यः । भाष्ये (यदि तर्हि सति भे
इत्यादिसिद्धान्तिवचः । (शकारच्छकारयोरिति) । तस्मात्प्रारम्भो तत्र
आवश्यकमिति भावः । ननु निश्छद्मेत्यत्र हलः परत्वाभावात्कथं लोपप्राप्तिरत
ह । अनचिचेति । तत्रैकदेशो प्रौढ्या समाधानमाह । एवं तर्हीत्यादि । स्वाङ्ग
च्येवेति । अमूर्धेत्यादिपर्युदासादेव स्वाङ्गे लब्धे स्वाङ्गादिति पुनः श्रुतिरसधार
र्थेति भावः । संज्ञायामित्यनुवृत्तेर्न दोष इत्यन्ये । नन्वेवं भिन्नस्थानानामपि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अथवा परस्तत्पुरुषस्ततो बहुव्रीहिः। आस्ये प्रयत्न आस्यप्रयत्नः। तुल्यआस्यप्रयत्न एषामिति। तस्य*। तस्येति तु वक्तव्यम्। किं प्रयोजनम्। यो यस्य तुल्यास्यप्रयत्नः स तस्य सवर्णसंज्ञो यथा स्यात्। अन्यस्य तुल्यास्यप्रयत्नोऽन्यस्य सवर्णसंज्ञो मा भूत्। तस्यावचनं वचनप्रामाण्यात्*। त-

---

दित्यलुङ्क भवति। तद्धितान्तास्यशब्दाश्रयणसामर्थ्यादेवास्यइत्येकत्वं विवक्ष्यते। तेनैकस्मिन्नेव स्थाने ययोस्तुल्यः प्रयत्न इत्याश्रीयते। अथवेति। मयूरव्यंसकादित्वात्सप्तम्यन्तोत्तरपदस्तत्पुरुषः। तस्येति। यत्तदोर्नित्यामिसंबन्धादाह। यो यस्येति। अन्यथा वर्णान्तरापेक्षया तुल्यास्यप्रयत्नत्वेन सवर्णत्वे लब्धे तदाश्रयमन्यस्यापि कार्यं प्राप्नोति। सूत्रारम्भस्तु रेफोष्मणां निवृत्त्यर्थः स्यात्। तस्या-

---

दत आह। तद्धितान्तास्येति। आस्यपदोपादानसामर्थ्याच्च तद्ग्रह इति भावः। एकत्वं विवक्ष्यतइति। तद्विवक्षां विनापि प्रत्यासत्त्या प्रयत्नयोरेकास्यभववृत्तित्वलाभ इत्यन्ये। चित्रदबहुव्रीहौ सप्तम्यन्तस्य पूर्वनिपातापत्तेः पूर्वपदार्थप्रधानतत्पुरुषस्याप्यगतिकगतित्वाद्भाष्ये द्वितीय आश्रितः। रेफोष्मेति। रेफोष्मणां सवर्णा न सन्तीत्युक्तेरिति भावः। तस्यावचनमिति वार्त्तिके तच्छब्देन कस्य परामर्शोत आह। तस्येत्ययमिति। तस्यावचनमित्यत्र षष्ठीतत्पुरुष इति भावः। एवञ्च स्यो न विभक्तिरिति लुगभावः। वस्तुतस्तच्छब्देन पूर्वोक्तस्य तस्य शब्दस्य परामर्श इति वक्तुं युक्तम्। रेफस्यापीति। रेफोष्मणामित्येतद्विजातीयसवर्णाभावप्रतिपादनपरमित्यर्थः।

---

* एकत्वं विवक्ष्यतइति। चिन्त्यमिदम्। एकवचनार्थैकत्वस्य विवक्षणेपि तस्य सजातीयद्वितीयराहित्यरूपतयासमानत्वस्यालाभात्। प्रकृते च समानएव स्थाने इत्याद्यर्थस्यापेक्षितत्वात्। तस्मात्प्रत्यासत्त्या तल्लाभ इति बोध्यम्।

* तुल्यास्येतिसूत्रस्थसवर्णपदस्य स्वरूपपरत्वात्संबन्धिशब्दत्वकथनं नोपपद्यतेइत्यत आह। तुल्यास्येति। अयमर्थः। तुल्यास्यप्रयत्नं सवर्णपदवाच्यमित्येतत्सूत्रार्थः ततश्च प्रदेशस्थं सवर्णपदं तुल्यास्यप्रयत्नार्थकमित्यकः सवर्णइत्यादौ पूर्वोक्तः सावर्ण्यमेवाचि दीर्घप्रवृत्तिं प्रति प्रयोजयति न तु कस्य चित्। एतेन कौमुद्यां तुल्यास्यप्रयत्नमित्यस्य वृत्तौ मिथःपदं प्रमादपतितं बोद्धव्यम्। तत्र सवर्णपदस्य सवर्णपदपरत्वेन तत्प्रतिपाद्यतावच्छेदककुक्षौ सादृश्यस्याप्रवेशेन मिथःपदप्रतिपाद्यपरस्परप्रतियोगिकत्वस्य तत्रान्वयासम्भवात्। विवरणे तु द्वन्द्वनिर्देशलभ्यौ तुल्यास्यतुल्यप्रयत्नशब्दावित्यर्थौ भाष्यस्य सवर्णशब्दो हि प्रदेशेपि सवर्णपदेकपरो न तु तुल्यास्यप्रयत्नत्वप्रवृत्तिनिमित्तक इति तस्य संबन्धिशब्दत्वं दुरुपपादमित्याद्युक्तम्। तच्चिन्त्यम्। प्रदेशस्थसवर्णपदस्य सवर्णपदवत्परत्वे संबन्धिशब्दैर्वा तुल्यमित्यादिसमाधानासङ्गतेः। तत्रत्यसवर्णशब्दस्य संबन्धिशब्दत्वाभावात्। ततश्च सवर्णपदवत्त्वस्याव्यावर्तकतया दध्यत्रेत्यादावपि दीर्घापत्तिः। किं च संबन्धाच्चैतद्गम्यतइत्यादेरयमर्थः। समानवाक्यार्थप्रविष्टयोर्द्वयोः संबन्धिनोर्मध्ये एकतरस्य संबन्धपुरस्का-


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्येति न वक्तव्यम् । अन्यस्य तुल्यास्यप्रयत्नोऽन्यस्य सवर्णसंज्ञः कस्मा
भवति । वचनप्रामाण्यात् । सवर्णसंज्ञावचनसामर्थ्यात् । यदि हि अन्यस्य
तुल्यास्य प्रयत्नो ऽन्यस्य सवर्णसंज्ञः स्यात् । सवर्णसंज्ञावचनमनर्थकं
स्यात् । संबन्धिशब्दैर्वा तुल्यम् * । संबन्धिशब्दैर्वा पुनस्तुल्यमेतत्
तद्यथा । संबन्धिशब्दाः । मातरि वर्तितव्यं पितरि शुश्रूषयितव्यमिति । न चो
च्यते स्वस्यां मातरि स्वस्मिन्पितरीति । सबन्धाच्चैतद्गम्यते । या यस्य
माता यश्च यस्य पितेति । एवमिहापि तुल्यास्यप्रयत्नंसवर्णमित्यत्र संबन्धि
शब्दावेतौ । तत्र संबन्धादेतदवगन्तव्यम् । यत्प्रति यत्तुल्यास्यप्रयत्नं
तत्प्रति तत्सवर्णसंज्ञं भवतीति । ऋकारऌकारयोः सवर्णविधिः * । ऋका

---

वचनमिति । तस्येत्ययमनुकरणशब्दः तस्येत्यस्यावचनमित्यर्थः । सवर्णसंज्ञावचन
ति । न च रेफोष्मणां निवृत्त्यर्थं वचनं, रेफस्यापि रेफः सवर्णो भवत्येव । एवमू
ष्मसु द्रष्टव्यम् । एवं वचनसामर्थ्याद्दोषं परिहृत्य शाब्दन्यायेन परिहर्तुमाह । सं
न्धिशब्दैरिति । संबन्धिशब्दाविति । तुल्यास्यप्रयत्नशब्दस्य संबन्धिशब्द
त्तत्समानार्थोपि प्रदेशवाक्येषूपात्तः सवर्णशब्दः संबन्धिशब्दः । यथा तुल्याय कन्
दातव्येत्युक्ते न शूद्रेण तुल्याय ब्राह्मणः कन्यां ददाति अपि त्वात्मना । तथे
पीत्यर्थः । ऋकारऌकारयोरिति । स्थानभेदान्न प्राप्नोतीत्यारम्भः । अत्र च

---

तत्र । रेफांशे । तुल्यास्यप्रयत्नासंभव एव ऊष्मसु तु नाज्झलाविति निषे
दिति बोध्यम् । एवञ्च व्यावर्त्याभावेन सवर्णसञ्ज्ञावचनसामर्थ्याद् यस्य तस्ये
लप्स्यत इति भावः । ननु सवर्ण इति सञ्ज्ञाशब्दस्य कथं संबन्धिशब्दत्वमत आ
तुल्यास्येत्यादि । स्वार्थभिन्नप्रतियोगिकसंबन्धनिमित्तः शब्दः संबन्धिशब्द इति भा
परे तु अत्र सूत्रे द्वन्द्वनिर्देशलभ्यौ तुल्यास्यतुल्यप्रयत्नशब्दावित्यर्थो भाष्यस्य । सव
शब्दो हि प्रदेशेपि सवर्णपदवत्परो न तुल्यास्यप्रयत्नत्वप्रवृत्तिनिमित्तक इति त
संबन्धिशब्दत्वं दुरुपपादमुपक्रमोपसंहाराभ्यां चैवमेवोचितम् । उपक्रमे हि
ल्यास्यं च तुल्यप्रयत्नञ्च सवर्णसञ्ज्ञं भवतीत्युक्तमित्याहुः । ऋकारऌकारयोरि

---

रेण प्रतीतौ स संबन्धः स्वसमानवाक्यार्थघटकप्रतियोगिक एव प्रतीयतइति । यथा तातेन
ल्यश्चैत्र इत्यादौ जनकत्वरूपं तातत्वं चैत्रनिरूपितमेव प्रतीयते । एवं तु तुल्यास्यप्रयत्नं सवर्ण
त्यत्र नैतद्विषयः । सादृश्यप्रतियोगिनस्तद्वाक्यार्थे केनापि रूपेणाप्रवेशात् । इत्थञ्च तस्येति व
व्यं संबन्धिशब्दैर्वा तुल्यमित्यादिभाष्यं प्रदेशाभिप्रायकत्वेनैव योजनीयमिति दिक् । अन्ये तु
वर्णपदमत्र सदृशवर्णत्वसमानाधिकरणसवर्णपदवत्परामिति योगरूढम् । तत्र योगार्थतावच्छेदक
सादृश्यस्य प्रवेशात्सवर्णशब्दस्य संबन्धिशब्दत्वं स्पष्टमेव ततश्च भाष्यमक्लिष्टयोजनमेव ऋकार
कारयोः सावर्ण्यविधेर्नाज्झलावित्यादेश्च नासंगतिः । एवं तु मिथः सवर्णसंज्ञमिति कौमुदी ग्र
माहुः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ऌकारयोः सवर्णसंज्ञा विधेया। होतृ ऌकारः। होतॄकार इति। किं प्रयोजनम्। अकः सवर्णे दीर्घ इति दीर्घत्वं यथा स्यात्। नैतदस्ति प्रयोजनम्। वक्ष्यत्येतत्। सवर्णदीर्घत्वे ऋति ॠ वा वचनम् ऌति ॡ वा वचनमिति। तत्सवर्णे यथा स्यात्। इह मा भूत्। दध्यॢकारः। मध्वॢकार इति। यदेतत्सवर्णदीर्घत्वे ऋतीति एतद्वृते इति वक्ष्यामि। ततः ऌति। ऌकारे परत

---

योरेव श्रुतत्वान्मिथः सवर्णसंज्ञा विज्ञायते न त्वेतयोरन्येन सहेति बोध्यम्। वक्ष्यत्येतदिति। तत्र ऌवावचनमित्यत्र दीर्घ इत्यनुवर्तते। तत्र ऌति ऌशब्दे विकल्पिते ऽप्राप्त एव पक्षे दीर्घो भविष्यति। स च भवन् ऌवर्णस्य दीर्घाभावादवर्णस्यान्तरतम्याद्दीर्घ ॠकारो भविष्यति। तत्सवर्ण इति। यद्यविधाय सवर्णसंज्ञां तदुच्येत अज्मात्रस्य ऌति तत्कार्यं स्यात् यथा दध्यॢकारइति। तस्माद्विधेया सवर्णसंज्ञा। ऋत इति वक्ष्यामीति। ऋकारस्य ऋकार एव सवर्ण इति ऋत्येव भविष्यति। ततः ऌति। ऋत इत्येव। इदं चासवर्णार्थम्। तेन ऌति रूपद्वयं सिद्धम्' तत्रासंहितायामृकारे होतृ ऋकार इति रूपं संहितायामपि ऋत्यक इति शाकलप्रकृतिभावे

---

अत्र ऋत्यक इति प्रकृतिभावः। वार्त्तिकेप्येवमेव पाठ इति प्रामाणिकाः। सावर्ण्यप्रतियोग्यनिर्देशादाह। अत्रचेति। भाष्ये। होतृऌकारः होतॄकारइति। ऌकारशब्दो देवतावाचीत्येके। विवृतस्य ऌकारस्य दीर्घस्याभावादृकारो दीर्घ उदाहृत इति बोध्यम्। नैतदस्तीति ( सवर्णसञ्ज्ञाया इति शेषः। नन्वीषत्स्पृष्टेन मुक्तेपि विवृतदीर्घः सवर्णसंज्ञां विना दुर्लभो ऽत आह। तच्चेति। भाष्ये तद्वचनद्वयारम्भेपि सवर्णसंज्ञावश्यकीत्याह। तत्सवर्णे इति। अज्मात्रस्येति। अनज्व्यावृत्त्यर्थमक इति वर्त्तते। सवर्णसंज्ञाभावात्सवर्णे इति नानुवर्त्तेत इति भावः। खण्डयति। यदेतदिति भाष्ये। सवर्णइतीति। आद्यवार्तिके सवर्णग्रहणमनुवर्त्तते इति भावः। तेन ऌतीति। सिद्धान्तेपि व्यवस्थितविभाषया अनभिधानेन वा होतृऌकारे पूर्ववार्तिकं गम्लृ ऌकारे चोत्तरवार्त्तिकं न प्रवर्त्तते एवं कॄ इति दीर्घस्य ऋकारे परे पूर्वस्य तस्यैव ऌकारे उत्तरस्य चाप्रवृत्तिस्तत एवेति भावः। रूपद्वयमिति। ईषत्स्पृष्टघटितं विवृतदीर्घघटितं चेति भावः। तत्रासंहितायामिति। समासे संहिता नित्या असमासे त्वीदृशं रूपं दुर्लभम्। होतृशब्दे विभक्तिश्रवणापत्तेः। होतृशब्दस्य नपुंसके संबुद्धौ रूपमित्यप्यतिक्लिष्टमिति चिन्त्यम्। भाष्ये तु होतृऌकार इति दीर्घप्रवृत्तियोग्ये द्वयोरुच्चारणमिति स्थिते इति शेषः। एवं शाकले होतृऌकार इत्यपि चिन्त्यम्। सवर्णत्वविधायकवचनाभावे एतद्विचारसत्त्वेन तत्र ऋत्यक इत्यस्याप्राप्तेः। इकोसवर्णे इत्यपि न समास इति निषिद्धम्। नित्यग्रहणन्तु तत्र भाष्ये प्रत्याख्यातमित्याहुः। सवर्णसञ्ज्ञावचनेनैकेनैव सिद्धे तद्द्वयं न कार्य-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लृकारो वा भवतीति । ऋत इत्येव । तन्न वक्तव्यं भवति । अवश्यं तद्वक्तव्यम् । ऊकालोऽज् ह्रस्वदीर्घप्लुतसंज्ञो भवतीत्युच्यते । न च ऋकार लृकारौ वाजस्ति । ऋकारस्य लृकारस्य चाच्त्वं वक्ष्यामि । तच्चावश्यं वक्तव्यम् । प्लुतो यथा स्यात् । होतृ ऋकारः । होतृकारः । होतृ ३ कार इति । होतृ लृकारः होत्लृकारः । होत्लृ ३ कार इति । किं पुनरत्र ज्यायः । सवर्णसंज्ञावचनमेव ज्यायः । दीर्घत्वं चैव हि सिद्धं भवति । अपि च ऋकारग्रहणेन लृकारग्रहणं संनिहितं भवति । यथेह भवति ऋत्यकः । खट्व ऋश्यः । माल ऋश्यः । इदमपि सिद्धं भवति । खट्वल्कारो माल्लकार इति । वा

---

एतदेव रूपम् । शाकलाभावे होतृकारो होतृकार इति रूपद्वयम् । लकारे ऽसंहितायां संहितायां च शाकले होतृ लकारइति । शाकलाभावे होतृकारो होत्लकार इति रूपद्वयम् । तन्न वक्तव्यमिति । द्वावप्येतौ दीर्घौ ॠ ॡ इति तत्र ऋकारं कदा चिदृ इति दीर्घः कदा चिदृ इति । लकारेऽपि ॠ ॡ इत्येतौ भविष्यतः सत्यां सवर्णसंज्ञायामिति भावः । न चेति । अर्धतृतीयमात्रत्वादिति केचिदाहुः । अन्ये तु ईषत्स्पृष्टकरणत्वादनयोर्ऋकारलृकारयोश्च विवृतत्वात्ताभ्यां तयोरग्रहणादनच्त्वमाहुः । अच्त्वं वक्ष्यामीति । सत्यच्त्वे दीर्घसंज्ञातयोर्भविष्यति । येषां मतमर्धतृतीयमात्रावेताविति तेषां मते सत्यप्यच्त्वे द्विमात्रत्वाभावादेतयोर्दीर्घसंज्ञा न प्राप्नोति । तस्माद् द्विमात्रावेतावभ्युपगन्तव्यौ । तच्चावश्यमिति । त्वयापि ऋकारवचनम्लृवावचनमिति ब्रुवता ऽच्त्वमनयोर्वक्तव्यम् । अन्यथा विधानमात्रमेव तयोः स्याद् नाच्कार्यं प्लुतः । सति त्वच्त्वे ताभ्यां त्रिमात्रयोरपि सावर्ण्याद् ग्रहणे सति प्लुतसंज्ञा भविष्यतीति प्लुतसिद्धिः । किं पुनरिति । एकैकस्मिन्संहितायां शाकल

---

मित्याह । भाष्ये ( तन्न वक्तव्यमिति ) । इतर आह । ( अवश्यमिति ) । ( अर्धतृतीयेति । तावतापि स्थानप्रयत्नसाम्येन ताभ्यां ग्रहणं स्यादित्यरुचेराह । ईषत्स्पृष्टेति ॥ विवृतत्वाभावे उपस्थितरेफीयप्रयत्नत्यागे मात्राभावादिति भावः । माममिति । असावर्ण्यादिति भावः । भाष्ये वचनद्वयप्रत्याख्यानवाद्याह । ऋकारस्येत्यादि सत्यच्त्वे इति । अयोगवाहेषु पाठादिति भावः । नाच्कार्यमिति । तस्य प्लुतसंज्ञा । तत्स्थाने प्लुतस्येति भावः । अत्र पक्षेपि उक्तयुक्त्या ह्रस्वऋकारद्वयस्थानिकदीर्घैकादेशातिरिक्तविषये आद्यस्य ह्रस्वऋकारलृकारद्वयस्थानिकदीर्घैकादेशातिरिक्त विषये द्वितीयस्य न साधुत्वमिति नातिप्रसङ्गः । पक्षद्वयोस्तुल्यफलता बोध्यम् । तदेव ध्वनयन् पृच्छति । भाष्ये ( किंपुनरत्रेति ) । ऋकारइति । वि इत्यर्थः । लृकारइति । ईषत्स्पृष्ट इत्यर्थः । भाष्ये ( दीर्घत्वं चैवहीति ) । ईषत्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सुय्यापिशलेः । उपकारीयति । उपाकारीयति । इदमपि सिद्धं भवति । उपल्का-रीयति । उपाल्कारीयति । यदि तर्हि ऋकारग्रहणेन ऌकारग्रहणं संनिहितं भवति । उरण्परः । ऌकारस्यापि रपरत्वं प्राप्नोति । ऌकारस्य लपरत्वं व-क्ष्यामि । तच्चावश्यं वक्तव्यम् । असत्यां सवर्णसंज्ञायां विध्यर्थम् । तदेव सत्यां रेफबाधनार्थं भविष्यति । इह तर्हि रषाभ्यां नो णः समानपदे इत्य-त्र ऋकारग्रहणं चोदितम् । मातॄणां पितॄणामित्येतदर्थम् । तदिहापि प्राप्नोति । क्लृप्यमानं पश्येति । अथासत्यामपि सवर्णसंज्ञायाम् इह कस्मान्न भवति । प्रक्लृप्यमानं पश्यति । चुटुतुलशर्व्यवाये नेति वक्ष्यामि । अपर आह । त्रिभिश्च मध्यमैर्वर्गैर्लशसैश्च व्यवाये नेति वक्ष्यामीति । वर्णैकदेशाश्च वर्ण-

---

भावपक्षे रूपद्वयं साध्यम् । तच्चोभयथापि सिध्यति । तत्र सवर्णसंज्ञायामसत्यां यथा सिध्यति तथा पूर्वमेवोक्तम् । सत्यां तु यथा सिध्यति तथोच्यते । अकः स-वर्णे दीर्घ इत्यत्रान्तरतमत्वदीर्घत्वयोरुपादेयविशेषणयोर्विवक्षितत्वादुभयविशिष्टैका-सम्भवाद्विकल्पः । यश्चान्तरतमो नासौ दीर्घो यश्च दीर्घो नासावन्तरतम इति द्व-योर्ऋकारयो रेफद्वययुक्तत्वाद्विवृतत्वाच्च कदा चिद्रेफद्वययुक्त ॠ भवति कदा चिद्विवृत ॠकारः । ऌकारेपि कदा चिदृकारान्तरतम ॠकारः कदा चिद् ऌकार इति साम्यमुभयोः पक्षयोः । लपरत्वमिति । व्याख्यास्यामीत्यर्थः । रपर इत्यत्र र इति लणिति लकाराकारेण प्रत्याहार आश्रीयते । तत्रान्तरतम्यादृकारस्याण् रपर ऌकारस्य लपरः । असत्यामिति । असत्यां सवर्णसंज्ञायामुरण् रपर इत्यत्र ऌकारग्रहणं कर्तव्यं भवति । प्रक्लृप्यमानमिति । कृत्यचइति णत्वप्रसङ्गः । त्रिभिश्चेति । पूर्वस्मा-दयं विशेषः । पूर्वत्र शरन्तभूतोपि षकारः साक्षाण्णत्वनिमित्तत्वाद् व्यवधायकत्वेन नाश्रीयते इह तु तस्यानुपादानमेव । वर्णैकदेशा इति । अवयवस्य स्वव्यापारानिव-र्तनात् । अग्रहणपक्षे तु क्षुम्नादेराकृतिगणत्वाण्णत्वाभावः । ॠदिताम् ॡदितां च

---

विवृतरूपो दीर्घो वर्ण इत्यर्थः । तद्व्याचष्टे । अपि चेत्यादिना । खट्वऌकार इति । होतॢकार इत्यस्याप्युपलक्षणम् । वचनस्य क्वाप्यदर्शनादाह । व्याख्यास्यामीति । अन्ये तु लण्सूत्रस्थाकारस्यानुनासिकत्वे ऽतोऌान्तस्य त्यत्र भगवान् पाणिनिर्ले-कारं नोच्चारयेत् प्रत्याहारेणैव निर्वाहात् । तस्मादपूर्वं वचनं कार्यमित्येव भाष्या-शय उचित इत्याहुः । आन्तरेति । रश्रुते रपरो लश्रुतेर्लपर इत्यर्थः । सवर्णसञ्-ज्ञावादी तदभाववादिनं प्रति तवाप्यावश्यकं तदित्याह । तच्चावश्यमिति । ऌकार-स्याण्लपरइत्येतत् । साचादिति । रषाभ्यामितिवचनादित्यर्थः । नन्वत्र लका-राभाव इत्यत आह । भाष्ये (वर्णैकदेशाइत्यादि । अग्रहणपक्षेत्विति । प्रक्ल-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ग्रहणेन गृह्यन्तइति योसौ लृकारे लकारस्तदाश्रयः प्रतिषेधो भविष्यति । यद्येवं, नार्थो रषाभ्यां नो णत्वे ऋकारग्रहणेन । वर्णैकदेशाश्च वर्णग्रहणेन गृह्यन्तइति योसौ ऋकारे रेफः तदाश्रयं णत्वं भविष्यति । तुल्यास्यप्रयत्नं सवर्णम् ॥ नाज्झलौ ॥१०॥ अज्झलोः प्रतिषेधे शकारप्रतिषेधो ऽज्झलत्वात् * । अज्झलोः प्रतिषेधे शकारस्य शकारेण सवर्णसंज्ञायाः प्रतिषेधः प्राप्नोति । किं कारणम् । अज्झल्त्वात् । अच्चैव हि शकारो हल्च । कथं तावदच्त्वम् । इकारः सवर्णग्रहणेन शकारमपि गृह्णातीत्येवमच्त्वं हल्त्वं चोपदेशाद्धल्त्वम् । तत्र को दोषः । तत्र सवर्णलोपे दोषः * । तत्र सवर्णलोपे दोषो भवति । परश्शतानि कार्याणि । झरो झरि सवर्णइति लोपो

---

भेदेनानुबन्धनिर्देशाद् भेदेन चोपादानादनुबन्धकार्येषु परस्परग्रहणाभावाद्व्यतिकराभावः ॥नाज्झलौ॥१०॥ अकारहकारयोरिकारशकारयोश्च तुल्यस्थानप्रयत्नत्वात्सवर्णसंज्ञा प्राप्ता निषिध्यते । अत एव निर्देशादचामाज्भिर्हलां हल्भिः सवर्णत्वानिषेधः । अज्झलोरिति । प्रकृतत्वात्सवर्णसंज्ञाया इति बोध्यम् । शकारप्रतिषेध इति । द्विवचनान्तस्य समासो भेदाधिष्ठानत्वात्सवर्णसंज्ञायाः । इकार इति । अत्र सूत्रे अणुदित्सूत्रे इकारो गृह्यमाणः सवर्णं गृह्णातीति शकारस्यापि ग्रहणमस्ति । स्वात्मनि क्रियाविरोधादस्मिन्नेव सूत्रे इदं न व्याप्रियतइति सवर्णत्वनिषेध इकारशकारयोर्नास्ति । यद्यपि चेत्यादौ तु शकार इकारेण न गृह्यते । अनेन सवर्णत्वनिषेधात् । इह तु स्वात्मनि व्यापारो नास्ति । अस्ति च पूर्वेण सवर्णत्वमिकारशकारयोरिति भावः । प्रकृत

---

प्यमानमित्यच क्लृप्यमानमित्यच चेति भावः । आद्ये क्लृत्यच इति द्वि ऋवर्णान्तस्येति प्राप्तिः । भेदेनेति । ओणृ गम्लृ इति भेदेनानुबन्धनिर्देशः नाग्लोपि शास्वृदितां पुषादिद्युताद्य्लृदित इति च भेदेनोपादानमित्यर्थः । नाज्झलौ ॥ १० ॥ अकारेत्यादि । एवञ्च ह्रारित्यादौ दीर्घः प्रयत्नभिन्नयणापत्तिरिति भावः । अतएवेति । पूर्वसवर्णदीर्घनिर्देशादित्यर्थः । किं चैवं यकः सवर्णे, झरो झरि सवर्णे, इत्यस्यासङ्गतिरित्यपि बोध्यम् । भेदाधिष्ठानत्वादिति । व्यक्त्यैक्ये हि तुल्यास्यप्रयत्नत्वासंभव इति भावः । (सवर्णग्रहणेनेति) अत्र सवर्णग्राहकेणाणुदित्सूत्रेणेत्यर्थः । अत्रहिसूत्रे इति । उच्चारितस्यैव प्रत्याहारप्रत्यपूर्वपक्षी न जानाति प्रत्याहारेषु जातिग्रहणमिति च न जानाति । ननु सवर्णत्वे इकारः शकारं गृह्णीयात् । तदेव च न नाज्झलाविति निषेधात् ... इह । प्राप्नोति । यद्यपि भाष्ये ... विषयोऽवा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पो न प्राप्नोति। सिद्धमनच्त्वात् *। सिद्धमेतत्। कथम्। अनच्त्वात्। कथमनच्त्वम्। स्पृष्टं करणं स्पर्शानाम्। ईषत्स्पृष्टमन्तस्थानाम्। विवृतमूष्मणाम्। ईषदित्येवानुवर्तते। स्वराणां च विवृतम्। ईषदिति निवृत्तम्। वाक्यापरिसमाप्तेर्वा *। वाक्यापरिसमाप्तेर्वा पुनः सिद्धमेतत्। किमिदं वाक्यापरिसमाप्तेरिति। वर्णानामुपदेशस्तावद् उपदेशोत्तरकाला इत्संज्ञा इत्संज्ञोत्तरकाल आदिरन्त्येन सहेतेति प्रत्याहारः प्रत्याहारोत्तरकाला सवर्णसंज्ञा सवर्णसंज्ञोत्तरकालमणुदित्सवर्णस्य चाप्रत्यय इति सवर्णग्रहणम्। ए-

---

चापवादविषयमिति न्यायो ऽत्र नास्ति। अपवादत्वस्यैवासंपत्त्या। परश्शतानीति। शतात्पराणि शताधिकानीत्यर्थः। कर्तृकरणे कृता बहुलमिति बहुलवचनात्समासः। पारस्करादित्वात्सुडागमः। सकारस्य श्चुत्वम्। अनचि चेति द्विर्वचनम्। झरो झरीति लोपाप्रसङ्गात्त्रिशकारश्रवणप्रसङ्गः। शरोऽच्यनचि चेत्यत्र त्विकारेण शकारो न गृह्यते। अनेन सवर्णत्वनिषेधादित्यस्ति शकारस्य द्विर्वचनम्। सिद्धमनच्त्वादिति। सूत्रप्रत्याख्यानसाधारणमुक्तम्। प्रयत्नभेदादज्झलोः सवर्णसंज्ञायाः प्राप्तिरेव नास्तीत्यर्थः। वाक्यापरिसमाप्तेरिति। भवतु वा तुल्यास्यप्रयत्नत्वं तथापीहेकारेण शकारो न

---

एतस्य विषयत्वविषयित्वयोर्न विरोधस्तथाप्येतद्वाक्यार्थबोधोत्तरमन्यत्र निषेधेऽपि स्ववाक्यार्थबोधात्प्राक् स्वघटकपदार्थोपस्थितिवेलायां स्ववाक्यार्थबोधरूपसावर्ण्याभावज्ञानाभावान्नात्रेकारशकारयोस्तदभावबोधनमिति भावः। अपवादस्यैवासंपत्त्येति। अपवादस्य नाज्झलावित्यस्यासंपत्त्या प्राग् बोधानाभावेन स्वविषये ऽप्राप्तौ तद्घटकपदोपस्थितयोरिकारशकारयोर्नापवादविषयत्वमित्यर्थः। बहुलेति। मयूरव्यंसकादित्वात्सुप्सुपेति वा समास इत्युचितम्। ननु कथं शस्य द्वित्वम्। अनचि चेति शरोऽचीति वा निषेधापत्तेरत आह। शरोचीति। ननु प्रयत्नभेदेनानच्त्वे सूत्रमेव व्यर्थं स्यादत आह। सूत्रेति। भाष्ये (ईषदित्येवेति)। एङैचोः परस्परसावर्ण्याभावाय विवृतत्वव्याप्यानामपि सवर्णसंज्ञानियामकत्वस्य सूत्रमते ऽप्यावश्यकत्वेन तदाश्रित्य सूत्रानारम्भ एव ज्यायान्। किं च दीर्घप्लुताकारहकारयोः सावर्ण्यव्यावृत्तये इदमपि तस्यावश्यकमिति भावः। (वाक्यापरिसमाप्तेर्वेति) अन्यथा नाज्झलावित्यस्य निषेधस्य स्वस्मिन्नपि प्रवृत्तौ तव पूर्वपक्षस्यैवानुत्थानं स्यादिति भावः। अनिष्पादमुपपादयति। अस्मिन्हीति। सूत्रे निष्पन्ने इति। जनितवाक्यार्थबोधे इत्यर्थः। प्रवर्त्तते इति। एते परस्परं सवर्णसंज्ञा इति प्रमारूपं निश्चयज्ञानं निष्पद्यत इत्यर्थः। तदेव च लक्ष्यसंस्कारकमिति भावः। निष्पत्त्यवस्थायाम्। वाक्यार्थबोधावस्थायाम्। सवर्णत्वेषु निष्पन्नेषु। तत्र सवर्णत्वनिष्पत्तिरिष्टविषये सवर्णपदवाच्यत्वग्रहः। नापि स्वात्मनीति। अनिष्पत्तेरिति भावः। अक्षरा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तेन सर्वेण समुदितेन वाक्येनान्यत्र सवर्णानां ग्रहणं भवति । न चात्रेकारः शकारं गृह्णाति । यथैव तर्हीकारः शकारं न गृह्णाति एवमीकारमपि न गृह्णीयात् तत्र को दोषः । कुमारी ईहते । कुमारीहते अकः सवर्णइति दीर्घत्वं

---

गृह्यते। सवर्णसंज्ञायाश्चास्मिन्सूत्रे ऽनिष्पादात्। अस्मिन् हि सूत्रे निष्पन्ने सत्यपवादविषयापरिहारेण इष्ट विषये सवर्णसंज्ञा प्रवर्तते। न त्वेतत्सूत्रनिष्पत्त्यवस्थायाम्। ततश्चाक्षूपदेशात्संज्ञा प्रत्याहारसवर्णत्वेषु निष्पन्नेष्वणुदित्सवर्णस्येत्येतदस्य च्वावित्यादौ प्रव न त्वक्षूपदेशादिषु । नापि स्वात्मनि। ततश्चात्र सूत्रेऽज्ञानिष्पत्त्याणुदिदित्यस्याप्रनादिकारेण शकारस्य ग्रहणात्सवर्णत्वं शकारयोः सिद्धम् । एवमीकारोऽप्यत्रेकारेण गृह्यतइतीकारशकारयोः सवर्णत्वमस्तीति कुमारीशेते इत्यत्र सवर्णदीर्घत्वं प्राप्

---

निष्पत्त्या अङ्गस्येष्टविषयसवर्णपदवाच्यत्वज्ञानस्यानिष्पत्त्या। भाष्ये(तावत्)।प्रथ (उपदेशोत्तरकालेति)। ज्ञातस्य संज्ञाविधानादिति भावः। प्रत्याहारोत्तरकाल वर्णसंज्ञेत्यादेरिष्टविषये सवर्णसंज्ञासंज्ञित्वग्रहणन्तदुत्तरकालमणुदिदित्येतदक दिभिः स्वसवर्णत्वेन ज्ञातानां ग्रहणं बोधयति इत्यर्थः । अपरिसमाप्तिश्च सवं णेयं विना तद्ग्रहणबोधनासामर्थ्यमित्यर्थः । तज्जन्ये शक्तिग्रहे बाधकसंभावनं ताप्रामाण्यसंभावनासत्त्वादिति तात्पर्यम् । यत्तु नाज्झलावित्यतः प्राक्तुल्यास्ये बोधाभावेन सवर्णपदार्थज्ञानाभावादणुदिदित्यस्य वाक्यार्थबोध इत्यर्थं इति। अभावज्ञाने प्रतियोगिज्ञानस्य कारणतया तुल्यास्येत्यतः प्राङ् निषेधवाक्यार्थ वो न तु विपरीतमित्यदोषादिति दिक्। सिद्धमिति । अन्त्यात्पदार्थोपस्थि ते वाक्यार्थबोधरूपसावर्ण्याभावज्ञानाभावादिकारशकारयोः सवर्णत्वज्ञानं दित्सूत्रजस्येष्टविषये वाक्यार्थबोधरूपशक्तिग्रहस्याभावान्नेकारेणाच शकारग्र मिति भावः। ननु वाक्यापरिसमाप्तिन्यायस्यास्मदादीन्प्रति प्रवृत्तत्वेऽपि पाणि स्तत्तच्छास्त्रप्रणयनान्यथानुपपत्त्या तत्तद्विषयज्ञानस्य प्रागपि सत्त्वावश्यकत्वे ज्ज्ञानस्यैतच्छास्त्रासाध्यत्वेन च नाज्झलावित्यादौ सवर्णाभिप्रायेण प्रयोग त्। अस्मदादीनां बोधस्तु तत्तात्पर्यज्ञव्याख्यातृपरंपरया लक्षणया भविष्य शकारयोः प्रतिषेधः प्राप्नोति एवसकारयोरपीति चेन्न। ज्ञानसत्त्वेऽपि तदभि प्रयोगे तात्पर्यग्राहकाभावात् ।करिष्यमाणसंज्ञाद्यभिप्रायेण पाणिनिव्यवहार वस्यैव प्रतिपादनाच्च । अत एव हलन्त्यसूत्रे इतरेतराश्रयमाशङ्क्य एकं समाहितं भाष्ये। अन्यथा पाणिनिना हलपदार्थस्य ज्ञातत्वेन तस्यान्योन्या भावात्तेन तदभिप्रायेण प्रयोगे बोद्धृबोधस्य लक्षणयैवोपपत्तौ तत्पर्यन्तानुधावन र्थकं स्यात्। मम तु पाणिनेस्तथा व्यवहाराभावान्न दोषः। उक्तार्थं ज्ञापकमप्य स्यति। एवमीकारोपीति। अत्र पक्षे दीर्घप्लुताकाराभ्यां हकारे सावर्ण्यवार प्रश्लेषाद्बोध्यम्। तत्र तात्पर्यग्राहका वेलास्वित्यादिनिर्देशाः, प्रागुक्तं भाष्ये

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्राप्नोति । नैष दोषः । यदेतदकः सवर्णइत्यत्र प्रत्याहारग्रहणम् । तत्रेकार ईकारं गृण्हाति शकारं न गृण्हाति । अपर आह । अज्झलोः प्रतिषेधं शकारप्रतिषेधोऽज्झल्त्वात् । अज्झलोः प्रतिषेध शकारस्य शकारेण सवर्णसंज्ञायाः प्रतिषेधः प्राप्नोति । किं कारणम् । अज्झल्त्वात् । अचैत्र हि शकारो हल्च । कथं तावदच्त्वम् । इकारः सवर्णग्रहणेन शकारमपि गृण्हातीत्येवमच्त्वम् । हल्षूपदेशाद्धल्त्वम् । तत्र को दोषः । तत्र सवर्णलोपे दोषः । तत्र सवर्णलोपे दोषो भवति । परश्शतानि कार्याणि । झरो झरि सवर्णइति लोपो न प्राप्नोति । सिद्धमनच्त्वात् । सिद्धमेतत् । कथम् । अनच्त्वात् । कथमनच्त्वम् । वाक्यापरिसमाप्तेर्वा । उक्ता वाक्यापरिसमाप्तिः । अस्मिन्पक्षे वत्येतदसमर्थितं भवति । एतच्च समर्थितम् । कथम् । अस्तु वा शकारस्य शकारेण सवर्णसंज्ञा मा वा भूत् । ननु चोक्तं परश्शतानि कार्याणि । झरो झरीतिलोपो न प्राप्नोतीति । मा भूल्लोपः । ननु च भेदो भवति सति लोपे द्विशकारम् । असति लोपे

---

चीत्यनुवृत्त्या निवार्यते । तत्र क्व ग्रहणकशास्त्रं प्रवर्तते क्व नेति विषयविभागप्रदर्शनाय चोद्यं करोति । यथैव तर्हीति । इकारस्य ह्यत्राग्राहकत्वं इष्टमित्यकः सवर्णे दीर्घ इत्यत्रापि प्राप्तमिति प्रश्नः । अनच्त्वमेव वाक्यापरिसमाप्त्या साध्यते न तु प्रयत्नभेदेनेत्याह । अपर आहेति । अस्मिन्पक्षइति । एकत्र हि साध्ये हेतुविकल्पो भवति। इह तु साध्यभेदः सिद्धेरनच्त्वं हेतुरनच्त्वस्य वाक्यापरिसमाप्तिः। एतच्चेति । अस्तु वा ग्रहणमिकारेण शकारस्येति वाक्यशेषाध्याहारात् प्रतिज्ञाविकल्पार्थो वाशब्द इत्यर्थः । ननु चेति । श्रुतिकृतं भेदमुपगम्योच्यते । स एष कथं भेदो नेत्यत्रैवच्छेदः । भेदे एवंत्यर्थः । अपर आह । स्याद्भेदो यदि नित्यो लोपःस्या-

---

ध्यम् । प्रदर्शनाय । बोधनाय । भाष्ये (यदेतदिति) । तद्बोधवेलायां वाक्यापरिसमाप्तेरिति भावः । एकत्रेति । तुल्यार्थानां विकल्प इति न्यायादित्यर्थः । मा वा भूदित्येतत्सूचितप्रतिज्ञाया आशयमाह । अस्तु वेति । ननु 'व्यञ्जनपरस्यैकस्यानेकस्य वानोच्चारणे विशेष' इति न्यायात् कथं भेद इत्यत आह । श्रुतिकृतमिति । भाष्ये( असति लोपे त्रिशकारमिति) वदन्प्रष्टव्यः। किं द्विशकारकं न स्यादिति तत्राद्य उत त्रिशकारं स्यादिति । आद्ये आह । असत्यपीति । द्विशकारं भवत्येवेत्यर्थः । द्वितीये आह । एवमपीति । विभाषा द्विर्वचनेपीत्यर्थः । एवमपीत्यनेन भेद एवेत्युक्ता तदुपपादनावसरे यदि लोपो न स्यादिति वाच्यं किमुच्यते नित्यो लोपःस्यादिति अतः छित्वा भिन्नकर्तृकत्वेन योजयति । स एषइति । त्रिशकारमिष्टमेवेति तात्प-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

